# ललिता

## षाण्मासिकी

## कवि-भारती

## L A L I T Ā

## राष्ट्रिया शोध-पत्रिका

## प्रथम अङ्क

संरक्षकाः

जगद्गुरुश्रीमद्रामानुजाचार्यस्वामिश्रीवासुदेवाचार्य 'विद्याभास्कर' महाराजाः

2023

प्रधानसंपादकः

**डॉ० कमलाकान्तत्रिपाठी**




**किशोर-विद्या-निकेतनम्**

बी-2/236-ए-1, (भारतीय स्टेट बैंक अस्सी शाखा)

भदैनी, वाराणसी-221001

# ललिता

## कवि-भारती

# सूचना

सुधी विद्वानों एवं संस्कृतसाहित्यप्रेमियों के विशेष आग्रह का समादर करते हुए "**ललिता-कविभारती**" वार्षिक के स्थान पर वर्ष २००९ से अर्धवार्षिक अर्थात् वर्ष में दो अंक प्रकाशित होगा।

**लेखकों के लिए-**

* लेखों का विषय संस्कृत साहित्य से सम्बन्धित होगा। जिसकी भाषा मुख्यतः संस्कृत होगी। हिन्दी एवं अंग्रेजी के लेख भी स्वीकार्य होंगे परन्तु उनका विषय सर्वथा संस्कृत वाङ्मय से सम्बन्धित ही होना चाहिए।
* स्वलिखित लेख शुद्ध करके प्रकाशक के पते पर प्रेषित करें, भाषागत अशुद्धि अधिक होने पर लेख प्रकाशन पर विचार नहीं किया जायेगा।
* लेख (Stardust, A.P.S. font) में टाइप होने चाहिए। लेख की प्रिन्ट एवं C.D. प्रकाशक के पते पर डाक से भेजें।

**नोट-** **ललिता** कविभारती-२००८ के अनन्तर अंकों में लेखकों के कार्यक्षेत्र-विवरण के प्रकाशन की योजना है जिसकी पूर्त्ति हेतु लेखकों से निवेदन है कि लेखों के साथ-साथ अपने कार्यक्षेत्र के विवरण, फोन नम्बर, ई-मेल पता प्रकाशक के पते पर भेजें।

**संपर्क-** पत्रिका के सम्बन्ध में किसी भी प्रकार की जानकारी के लिए प्रकाशक से सम्पर्क करें-


**डॉ० संतोष द्विवेदी**
**किशोर-विद्या-निकेतनम्,**
**ललिता ( कविभारती )**
**बी-2/236-ए-१ भदैनी, वाराणसी-२२१००१**
**9415996512**
***Email : kvnpublisher@gmail.com, Website : www.kishorvidyaniketan.com***


**SUBSCRIPTION OF LALITĀ KAVI-BHĀRATI**

**Note:** *Membership request is available at website of KVN.*

**For Institute/University/Libraries:**

| | |
|---|---|
| (Life time, 15 years, 30 Issue) | INR 5000-00/USD 150 |
| Yearly Membership (two Issue) | INR 400-00 |
| | *(Including Postage)* |

**For Individuals:**

| | |
|---|---|
| (Life time, 15 years, 30 Issue) | INR 3000-00/USD 100 |

# सम्पादकीयम्

**अखण्डं सहजञ्चैव सच्चिदाकारविग्रहम्।**
**सर्वशेषितया भान्तं तमानन्दमुपास्महे।।**

राष्ट्रियशोधपत्रिकाया ललिताकविभारत्याः ख्रैस्ताब्दीयैकोनविंशत्युत्तरद्विसहस्रतमवर्षस्य प्रथम अङ्कं प्रकाशयन्नहं प्रमोदघनमनुभवामि। अत्र प्रकाशिताः सर्वे निबन्धा महता प्रयासेन गभीराशयं प्रकाशयन्तोऽनुसन्धातृभिः संग्रथिताः प्रतिभासन्ते। डा. श्रीमत्याः के.वि.आर.बि. वरलक्ष्मीमहोदयायास्तथा श्रीमतो बि. गोपालाचारमहोदयस्य यथासंख्यं श्रीमद्भगवद्गीताया औपनिषदत्वं भगवद्गीतोपदेशश्चेति लेखद्वयं चकास्ति। श्रीगीतेति नाम भगवता श्रीकृष्णेन गुडाकेशं प्रत्युपदेशात्मना गीतत्वेनास्ति। सकलवेदरहस्यार्थप्रकाशकत्वेनाऽस्या औपनिषदत्वं कथयितुं शक्यम्। अभ्युदयोऽपि वेदैकमात्रगम्यधर्मानुष्ठानप्राप्यविविधफलानुस्यूतप्रीतिरूपः सन् निःश्रेयसं प्रापयति जनान्। धर्मव्यतिरेकेण हि लब्धार्थद्वारा प्रीतिर्या जायते सा जनानधोधो नयन्ती निरयं प्रापयति। अत एव शिष्टा नाऽर्जननियममतिक्रम्य धनं समीहन्ते। ये तावल्लौकिकसुखनिमग्नान्तरा अनाकलितनिजस्वरूपभूतानन्दभरा जगत्क्षोभकरा बहिर्वृत्तयो यतःकुतश्चिदुत्कोचोपदोपधिसमालम्बनेन स्वविभववितानाय कुटुम्बपरिपूर्णताविधानाय वा वित्तमर्जयन्ति ते न तद्वित्तेन धर्मं पुष्णन्ति तेन च फलं लभन्ते। तेषां न स्वप्नेऽपि प्रपत्ति र्गोचरीभवति। **'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते'** इतिश्रीभगवद्वचनेन ज्ञानं विना नास्ति प्रपन्नतेति निश्चीयते। ज्ञानमेव प्रपत्तेः साधनमित्यभिप्रायः। ज्ञानस्य साधनं किमस्तीति जिज्ञासायां श्रीभगवानेवैवमाह-

**'भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्त्वतः।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्'।। इति।**

भक्तिश्च श्रीभगवति परा प्रीतिरिति कथितमभियुक्ततल्लजैः। भक्तिं विनापि द्विजलोकस्या-ऽर्थज्ञानावसानमध्ययनं भवति ततश्च लौकिकपदप्रतिष्ठाप्राप्तिः। शास्त्रव्यतिरेकेणापि धनार्जनप्रयासो भवति तुच्छप्रतिष्ठालब्धये वा विद्वत्परिषदपहरणप्रयासो दलान्तरप्रवेशः स्वजनान् प्रति निर्भर्त्सनं च भवति। मिथ्याविनीतताऽपि समुल्लसति कलौ वेदान्तिनाम्। अहो तुच्छलाभाय गुरुपदकमलनिषेवणं मनुग्रहणं ततस्तथा तत्परिवारेण साकं घनिष्ठता विधीयत एव तैर्येषां न भगवद्भतिप्रयुक्तशास्त्राध्ययनम्। भक्तिरपि प्राक्तनपुण्यपुञ्जप्रभावशोन्मिषितश्रीनिवासप्रीतिद्वारैव भवितुमर्हति। न हि सहृदयता जनस्याऽल्पस्य तपसः फलम्।

यथोदाहृतमेवैतत् पद्यमालोके ध्वनिकृता-

**'शिखरिणि क्व नुनाम कियच्चिरं**
**किमभिधानमसावकरोत् तपः।**
**तरुणि! येन तवाऽधरपाटलं**

**दशति बिम्बफलं शुकशावकः'।। इति।**

किञ्च–

**'अपि चेत् सुदुराचारो भजते मामनन्यभाक्।**
**साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः'।।**

इति वचनं भक्तेः प्रभावं व्यनक्ति। अध्ययनमपि शास्त्राणां भगवदाज्ञारूपत्वाद् भक्तिं विना न परिपूर्णतामेति। भगवद्भक्तौ हि तदाज्ञारूपशास्त्रानुरागः सम्भवति ततश्च निष्कामतया धर्मानुष्ठानम्। न्यासिनामपि कृते भगवान् यज्ञदानतपसामवश्यानुष्ठेयत्वमाह–

**'यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्'।। इति।**

**'तेन त्यक्तेन भुञ्जीथाः'** इति श्रुतिमभिलक्ष्य शङ्खः स्मरति–

**'परान्नं परवस्त्रं च परयानं परस्त्रियः।**
**परगेहे निवासश्च शक्रस्यापि श्रियं हरेत्'।। इति।**

एवं परिग्रहत्यागोऽपेक्षितो भवति। न हि सत्परिग्रहि अपि निःश्रेयसपथिकः। असत्परिग्रहिणां का स्थितिर्भवेदित्यर्थापत्त्याऽवगन्तुं शक्यमेव। के वेदानीं न परिगृह्णन्ति। पाषण्डमपि समर्थयन्ति विपश्चितः कलौ ददति चानर्हाय ब्रह्मर्षिमहाब्रह्मर्षिनामोपाधिम्। अन्येषां समर्थनं कृत्वाऽर्थलाभाय तद्विरोधिनामपि पत्रे हस्ताक्षरं विदधति। अवमानिनामपि पक्षे गच्छन्ति सुहृदस्त्यक्त्वा। सर्वथा यत्कर्मणो निष्कृतिर्नास्ति तां कृतघ्नतामप्युररीकुर्वन्ति। यत्प्रस्तावं पारयन्ति तमेव स्वार्थपिहितलोचनाः खण्डयन्ति कदाचित्। **मुधैव तेषां जीवनं वराकाणाम्।** तेषां कृते गीतोपदेशोऽकिञ्चित्कर एव। अनुसन्दधतु ते महर्षेर्व्यासस्येदं सूक्तम्–

**'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।**
**किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्'।। इति।**

एतत् सर्वं समाकलय्य वक्तुं शक्यते किं किं नोपदिशति श्रीमद्भगवद्गीता नः। महर्षिः शङ्ख एवाऽऽह–

**'म्लेच्छदेशे तथा रात्रौ सन्ध्यायां च विशेषतः।**
**न श्राद्धमाचरेत् प्राज्ञो म्लेच्छदेशं न च व्रजेत्'।। इति।**

अधुना तु जगद्गुरवोऽपि धनधिया म्लेच्छदेशान् गन्तुमुत्का भवन्ति विहितमन्दिराश्च तत्र बहव आङ्ग्लभाषया सह शास्त्राणि पठितुं प्रेरयन्ति विद्यार्थिबृन्दानि। भवेत्तथाऽर्चकावसरस्तत्र। यद्यर्थविषयिणी तृष्णा श्रीगीतोपदेशिनामपि न शाम्यति तदा गीतायाः क उपयोग इदानीम्? पतन्ति सनातनात् पथस्ते ये म्लेच्छदेशे कृतनिवसतयः समाहृतापारवित्ततयश्च। हन्त! तथाभूतानामाध्यक्ष्ये विद्वत्परिषदोऽध्यक्षश्चीयते। एवं दुखरथेदानीं दृश्यते शास्त्रनिदेशस्य। सर्ववेदसिद्धान्तसारं प्रस्तौति गीता यमाश्रित्य निःश्रेयसलाभो न दूरे। भगवति भक्तिर्भवेत्। सैव निवारयेदनर्थाचरणजातम्। एवञ्चान्धभक्तिव्युदासाय गीताऽस्तीति निष्कर्षः। अत एवाह श्रीभगवान्–

**'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति'।। इति।**

कमला कान्त त्रिपाठी

# विषयानुक्रमणिका

# D E C L A R A T I O N


| | | |
|---|---|---|
| Name of the Journal | : | **Lalitā Kavi-Bhāratī : Vol. XI, No. I 2023** |
| Language | : | Sanskrit, Hindi, English |
| Time of Publication | : | June, 2023 |
| Name of the Publisher | : | Dr. Santosh Dwivedi<br>Kishor Vidya Niketan |
| (a) Nationality | : | Indian |
| (b) Address | : | Kishor Vidya Niketan<br>B-2/236-A-1, Bhadaini,<br>Varanasi-221001, Uttar Pradesh |
| Place of Publication | : | Varanasi |
| Name of the Printer | : | Rakesh Yadav |
| (a) Nationality | : | Indian |
| (b) Address | : | New Delhi. |
| Name of the Press | : | Kumar Graphics, New Delhi |
| Name of the Editor | : | Dr. Sanjeev Sharma |
| (a) Nationality | : | Indian |
| (b) Address | : | P-1/2, Ravindrapuri, Lane No. 11,<br>Varanasi-221001 |
| Owner of the publication | : | Kishor Vidya Niketan<br>B-2/236-A, Bhadaini, Varanasi-<br>221001, Uttar Pradesh |

The above declaration is true to the best of my knowledge.

Editor

# श्रीमद्भगवद्गीताया औपनिषदत्वम्

**डॉ. श्रीमती के.वि.आर.बि. वरलक्ष्मी**
श्री वै.एन् कलाशाला, नरसापुरम्
पश्चिमगोदावरिजिल्ला, आन्ध्रप्रदेश्-५३४२७५

श्रीमद्भगवद्गीता प्रस्थानत्रये अन्यतमा भवति। श्रीमन्महाभारते मध्ये मणिरिव भाति। सा गीता उपनिषदां सारभूतत्वात् ब्रह्मविद्येति च नाम्ना सुप्रसिद्धा। अष्टादशपर्वसमन्वितश्रीमन्महा-भारतान्तर्गतभीष्मपर्वस्थिता श्रीमद्भगवद्गीता अष्टादशाध्यायसमन्विता भाति। अस्यां गीतायां सप्तशतश्लोकाः (७००) सन्ति। अस्यां गीतायां प्रत्यध्यायं योग इति नाम्ना आहूयते।

**गीताशब्दनिष्पत्तिः-**

गै[१] धातोः कर्मणि क्तप्रत्यये[२] गीता इति शब्दः स्त्रीलिङ्गे सिध्यति। अस्य शब्दस्य अर्थं विवृण्वता शब्दकल्पद्रुमेण गीयते स्म आत्मविद्योपदेशात्मिका ब्रह्मतत्त्वोपदेशमयी कथा यत्र इति[३] उक्तम्। ततः मोनिमियर्विलियंमहाभागेन गेयं पवित्रगेयं अथवा पवित्रग्रन्थः आदर्शमुनिकथितः छन्दोबद्धमतसिद्धान्तः वा गीताशब्दवाच्यो भवति[४] इति उक्तम्। गुरुशिष्यकल्पनया आत्मविद्योपदेशात्मिके कथाविशेषे गीताशब्दः सुप्रसिद्ध इति वाचस्पत्यम्।[५] गीता इति शब्द आकारन्तस्त्रीलिङ्गः प्राचुर्येण बहुवचनान्तश्च चिरात् दृश्यते।

''**सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः**''[६] इतिप्रत्यध्यायान्ते ''श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां'' इत्यादिवचनैः गीतायाः उपनिषत्त्वं ज्ञायते। श्रीमद्भवद्गीयातां कतिचनस्थलेषु उपनिषन्मन्त्राः श्लोकरूपेण दृश्यन्ते। अनेन भगवद्गीताया उपनिषत्सारसमन्वितत्त्वं ज्ञायते।

यथा उपनिषत्सु शिष्यः सन्देहनिवृच्यर्थं गुरुं अन्विष्य प्रणम्य पृच्छति तथैव जगद्गुरुश्रीकृष्णं गुरुं अभिज्ञाय ''तेशिष्य इति अर्जुनः कर्तव्योपदेशं अभ्यर्थयत्।

प्रथमतो विषयोऽयं विविधोपनिषत्सु एवं दृश्यते- **तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। ''तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।''**[७]

**''शौनको ह वै महाभागोङ्गिरसं विधिवदुपसन्नः प्रपच्छ**[८]
**भृगुर्वै वारुणिः। वरुणं पितरमुपससार।**[९]
**अधीहि भगव इति होपससाद सनत्कुमारं नारदः''**[१०]

इत्यादिषु तत्त्वोपदेशार्थं शिष्यः गुरुमभ्यर्थयतीति सूच्यते। एवमेव कुरुक्षेत्रसङ्ग्रामे बन्धून् दृष्ट्वा

शोकमोहाभिभूतो, व्याकुलचित्तोऽर्जुनः जगद्गुरुं शरणमवाप।

**''कार्पण्यदोषोपहतस्वभावः, पृच्छामि त्वां धर्मसम्मूढचेताः।**
**यच्छ्रेयःस्यान्निश्चितं ब्रूहि तन्मे, शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्।।''**[११] इति।

अपि च तैत्तरीयोपनिषदि सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्।[१२] इति विषयोऽयं गीतायां भङ्ग्यन्तरेण प्रतिपादितः।

**''यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति स सुखं न परां गतिम्।**[१३]
**''ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः।।**[१४]

यः शास्त्रमतिक्रम्य कर्माण्याचरति सः सिद्धिं सुखं च न प्राप्नोति। सः नष्टचेतास्सन् सर्वज्ञानविहीनः भवतीति उक्तम्।

कठोपनिषदि विद्यमानः न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्।।

''अजोनित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे।।[१५] इतिमन्त्रः भगवद्गीतायां-

**''न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।**
**अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे''।।**[१६] इति।

अनेन श्लोकेन आत्मा जननमरणरहितः, शाश्वतः, स्थिरश्चेति ज्ञायते। तथैव-

**''हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते।।**[१७]
**इति कठोपनिषन्मन्त्रः गीतायां**
**''य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते।।''**[१८]

इति श्लोकरूपेण दृश्यते। अनेन आत्मा कर्तृत्वरहितो, निर्विकारो सनातनश्चेति ज्ञायते। अपि च।

**''इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धि र्बुद्धेरात्मा महान्परः।।''**[१९]
**इति कठोपनिषन्मन्त्रः श्रीमद्भगवद्गीतायां**
**''इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः।।''**

इति श्लोकेऽपि मनस इन्द्रियश्रेष्ठत्वं प्रतिपादितम्।[२०]

**''न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः''**[२१]

इतिमन्त्रः गीतायां

''**न तद्भासयते सूर्यो न शशाङ्को न पावकः।**
**यद् गत्वा न निवर्तन्ते तद्धाम परमं मम।।**[२२]

इति श्लोकः तत्परमं पदं सूर्यचन्द्रादिभिः न प्रकाशयते। तत् स्थानं प्राप्य न पुनरावर्तत इति उपनिषन्मन्त्रसमानार्थकत्वेन भाति। ''**श्रवणायापि बहुभि र्यो न लभ्यः, शृण्वन्तोपि बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोस्य लब्धा, आश्चर्यो ज्ञाता कुशलानुशिष्टः।।**''[२३] इत्युपनिषन्मन्त्रतुल्यार्थकत्वेन गीतायाम्।

''**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः।**
**आश्चर्यवच्चैवमन्यः शृणोति, श्रुत्वाप्येनं वेद न चैव कश्चित्।।**''[२४]

एक आत्मस्वरूपं साश्चर्यं पश्यति। अन्य आश्चर्ययुक्तो तत्स्वरूपं वदति। तदन्य आश्चर्येण शृणोति तथापि कोपि तत्स्वरूपं न जानातीति प्रतिपादितम्।

प्रणवोपासनविधिः, मुण्डकः, प्रश्न, कठ, तैत्तिरीय, छन्दोग्योपनिषत्सु दृश्यते।

''**एतेद्ध्येवाक्षरं ब्रह्म। एतद्ध्येवाक्षरं परम्।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्।।**''[२५]

एतदालम्बनश्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते इति कठोपनिषन्मन्त्रः। तथैव गीतायां–

''**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम्।।**[२६]

इति श्लोकेन प्रणवमन्त्रविधिः मोक्षप्राप्तिकारीति कथितम्। '**नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वाविशन्ति**'[२७] इत्यादिवाक्यैः क्षीणपुण्योलोकान्तरं प्राप्नोतीति ज्ञायते। एवमेव गीतायां ते **तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।**''[२८] इति श्लोके पुण्यक्षयेण मर्त्यलोके पुनर्भवतीति कथितम्। एवमेव ''ज्ञानाग्निदग्धकर्माणं ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा'' इत्यादिगीतावाक्येषु–उपनिषद्वाक्यानुसारं ज्ञानौन्नत्यं प्रतिपादितम्।

एवं रीत्या विविधोपनिषत्सु प्रतिपादिताः कर्मभक्तिज्ञानादिविषयाः श्रीमद्भगवद्गीतायां भङ्ग्यन्तरेण प्रतिपादिताः। अत एव श्रीमद्भगवद्गीता उपनिषत्सारसमन्विता भाति।

## संदर्भ सूची


१. गैशब्देइतिधातुः।
२. तद्धातो कर्मणि क्त प्रत्ययः कर्मणि क्त इति पाणिनिसूत्रम्।
३. इति निघण्टुग्रन्थे।
५. वाचस्पत्यम्, भाग–४, पृ.–२५९३।
६. गीताप्राशस्त्यम्, श्लोक, ५, पृ. २१।
७. मुण्डकोपनिषत्, प्रथममुण्डके, खण्ड–२, मन्त्र–१२, १३, पृ. १७।

८. मुण्डकोपनिषत्, प्रथममुण्डके, खण्ड, मन्त्र-३, पृ. १६।
९. तैतरीयपनिषत्, भृगुवल्ली, अनुवाक-१, पृ. २८।
१०. छान्दोग्योपनिषत्, अध्याय, ७, खण्ड-१, पृ. ७१।
११. श्रीमद्भगवद्गीता, अ.-२, श्लोक-७।
१२. तैत्तरीयोपनिषत्, शिक्षाध्यायः, अनुवाकः-११।
१३. श्रीमद्भगवद्गीता-अ. १६, श्लोक-२२।
१४. श्रीमद्भगवद्गीता-अ. ३, श्लोक-२८।
१५. कठोपनिषत्, अ. १, वल्ली-२, मन्त्र-१९, पृ. ७।
१६. श्रीमद्भगवद्गीता-अ. २, श्लोक-२८।
१७. कठोपनिषत्-अ. १, वल्ली-२, मन्त्र-१९, पृ. ७।
१८. श्रीमद्भगवद्गीता-अ. २, श्लोक-१९।
१९. कठोपनिषत्-अ-१, वल्ली-३, मन्त्र-७, पृ. ७।
२०. श्रीमद्भगवद्गीता-अ. ३, श्लोक-४२।
२१. कठोपनिषत्-अ-२, वल्ली-३, मन्त्र-१५, पृ. ९।
२२. श्रीमद्भगवद्गीता-अ. १५, श्लोक-६।
२३. कठोपनिषत्-अ. १, वल्ली-२, मन्त्र-७, पृ.-६।
२४. श्रीमद्भगवद्गीता, अ. २, श्लोक-२९।
२५. क.उ.-अ-१, वल्ली-२, मन्त्र-१६, पृ. ८६।
२६. श्रीमद्भगवद्गीता, अ.-४, श्लोक-१६।
२७. मुण्डकोपनिषत्- प्रथममुण्डके-खण्ड-२, मन्त्र-१०, पृ. १७।
२८. श्रीमद्भगवद्गीता-अ. ९, श्लोक-२९।



**श्रीकृष्णपरब्रह्मणे नमः**

# ।।भगवद्गीतोपदेशः।।

**बि. गोपालाचार**
निर्देशकः, श्रीवादिराजसंशोधनप्रतिष्ठानम्
गीतामन्दिरम्, उडुपि, कर्नाटक ५७६ १०१

**सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।**

सुविदितमेव इदं अध्यात्मरसपीयूषजुषां समेषां मानुषाणां यत् परःशतैः वर्षैः परःशतैः भारतीयैः पाश्चात्यैश्च मुक्तकण्ठेन परिगीता कृतिरेकास्ति चेत् भूतले सा भगवद्गीतैव इति। या च जगतीतलविख्यातासु सर्वास्वपि भाषास्वनूदितासु कृतिरन्यतमा, यां च श्रुतिशतपरिगीतः शुद्धभावैर्गृहीतः देवकीपोतः पृथासुतायोपदिदेश कुरुक्षेत्रसमराङ्गणे। यया च मानवजना अद्यापि स्फूर्तिं मार्गदर्शनं च प्रतिपदं लभन्ते। महाभारतपारिजातमधुभूतेयं गीता साक्षात् भगवतः मुखपद्माद् विनिःसृता। तथा च उक्तम्- ''**गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्माद् विनिःसृता**''।। इति।

गीतेति द्व्यक्षरश्रवणमात्रेण समेषां चित्तभित्तौ इदम्प्राथम्येन भगवद्गीतैव स्फुरति, नान्या सतीष्वन्यासु बह्वीषु गीतासु इत्येतदेव आवेदयति अस्याः महिमानम्। गान्धी-तिलक-राधाकृष्णन् प्रभृतयः राजकीयनेतारोपि स्वातन्त्र्यसङ्ग्रामे अनयैव स्फूर्तिं प्रेरणां च लब्ध्वा भारतमातुः दास्यविमोचनं व्यदधुः। तस्मात् नैतादृशी धार्मिककृतिः अन्या अस्ति जगति इत्युक्ते नातिशयोक्तिः भवेत्। तदेतादृशायां गीतायां विद्यमानानि नैकानि वचनानि सूक्तिरूपेण, ध्येयवाक्यरूपेण वा अधुना आधुनिकैरपि उपयुज्यन्ते। ''योगक्षेमं वहाम्यहम्'' ''न हि ज्ञानेन सदृशं पवित्रमिह विद्यते'' ''योगः कर्मसु कौशलम्'' ''भक्त्या त्वनन्यया शक्यः'' ''तत्कुरुष्व मदर्पणम्'' ''सम्भवामि युगे युगे'' इत्यादीनि वचनानि तत्र तत्र उपयुज्यमानानि दृश्यन्ते। एतादृशानि मौलानि वचनानि बहूनि सन्ति गीतायाम्। तथा हि-

## १. कर्मण्येवाधिकारस्ते....

गीतायां तृतीयोऽध्यायः अतीव प्रथितः, यस्मिन् कर्मयोगस्य महिमा महीधरेण श्रीकृष्णेन सम्यक् प्रत्यपादि। अत एव अयं अध्यायः ''कर्मयोग'' इत्येव प्रथितः अस्ति। न केवलं तस्मिन्नेव अध्याये किन्तु ''बुद्धियोगे त्विमां श्रुणु'' इत्यारभ्य आपञ्चमाध्यायान्तं कर्मयोगः सूपपादितः। तत्र '**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूः मा ते सङ्गोस्त्वकर्मणि**' इति श्लोके ऽपि कर्मयोगस्य महिमा सम्यगुपापादि। तथा च अयं निर्गलितार्थः। फलदाने ईश्वरस्यैव समर्थत्वात्, भगवान् कर्ता इति पवित्रानुसन्धानेन

फलापेक्षां विहाय भगवद्भक्त्या ''नाहं कर्ता हरिः कर्ता'' इति पवित्रानुसन्धानेन सर्वैः स्वस्ववर्णाश्रमोचितं कर्म कार्यम् इति। अत्र फलकामना न कार्या इत्युक्ते या कापि फलकामना न कार्या इति नार्थः। ''अनिषिद्धकामितैवातो ह्यकामित्वमितीर्यते'' इति गीतातात्पर्ये श्रीमध्वाचार्यैः प्रतिपादितम्। अनिषिद्धकामित्वस्यैव कामनात्यागशब्देन विवक्षितत्वात्। तस्मात् भगवद्भक्ति-ज्ञान-प्रसादानां कामनासत्वेपि न काचित् क्षतिः। साधकपुरुषः स्वीयसर्वास्वपि क्रियासु ''कर्मण्यकर्म यः पश्येत्'' इत्युक्तरीत्या भगवदधीनतां चिन्तयति। सर्वाणि कर्माणि अन्ते भगवते समर्पयति।

### आदर्शकर्मयोगी हनुमान्-

अस्य कर्मयोगिलक्षणस्य निदर्शनभूतः महाभागवतप्रवर्यः कपिप्रवर्यः श्रीमान् धीमान् हनुमानेव। हनुमता यद्यत्कृतम् तत्सर्वं श्रीरामार्थमेव कृतम्। हनुमान् समुद्रोल्लङ्घनं कृत्वा लङ्कां गत्वा सीतां च दृष्ट्वा पुनरागत्य श्रीरामाय सीतासन्देशं निवेदयामास। तेन श्रीरामोपि महान् सन्तुष्टः अभवत्। तस्मिन्नेव अवसरे हनुमता यद्यदपेक्षते तत्सर्वं दातुं रामः सिद्धः समर्थश्च आसीत्। तथापि हनुमान् किमपि नापेक्षितवान् इत्येतत् आश्चर्यं जनयति। निःस्पृहेण हनुमता किमपि नापेक्षितम्। भगवद्भक्तिभगवदनुग्रहौ विना कर्मयोगिना हनुमता किञ्चिदपि नापैक्षि। ''**प्रवर्धतां भक्तिरलं क्षणे क्षणे त्वयीश मे ह्रासविवर्जिता सदा। अनुग्रहस्ते मयि चैवमेव निरूपधौ तौ मम सर्वकामः**'' इत्येवं हनुमान् प्रार्थयामास। एवञ्च, आदर्शकर्मयोगी धीमान् हनुमानेव ''कर्मण्येवाधिकारस्ते'' इत्युक्तप्रमेयस्य निदर्शनभूत इति निर्विवादम्।

तथा च अयं श्लोकः कार्मिकहितासक्तेः विरोधि इति केचन अधुनातनाः विमर्शकाः आक्षिपन्ति। परन्तु नेदं युक्तिसहम्। कर्मानुष्ठानसमये यदि फल एव अस्माकं गमनं भवेत् तर्हि कर्मानुष्ठानं समीचीनतया न भवेत् इत्यभिप्रायपरत्वं अस्य श्लोकस्य। श्लोकोयं अस्मान् शिक्षयति। लोके वयं सर्वेऽपि यद्यत् सत्कर्म कुर्मः तस्य सर्वस्याऽपि प्रसिद्धिं प्रतिफलं चापेक्षामहे। नैतद्युक्तम्। अस्माभिरपि योगीव विनैव प्रसिध्यपेक्षां प्रतिफलापेक्षां च निरहङ्कारेण निर्मलचित्तेन भगवद्भक्त्या श्रद्धया ईश्वराराधनरूपेण च कर्म कार्यम्। एतादृशमेव कर्म बन्धकं न भवति इत्याशयेन श्रीकृष्णः 'कर्मण्येवाधिकारस्ते मा फलेषु'' इति आदिदेश।

अखिलानां शास्त्राणां सारभूता अस्ति इयं ''भगवद्गीता''। तदस्याः अर्थपूर्वकेण अध्ययनेन भगवद्भक्तिः दृढा निश्चला च भवति। अस्माकं जीवनं सफलं तया च भक्त्या प्रीणाति प्रभुः श्रीकृष्णः। तस्मात् सर्वैः सर्वप्रत्नेन गीताया अध्ययनं अवश्यं कार्यम्। एतावत्पर्यन्तं गीतागतानि कानिचित् वाक्यानि अधिकृत्य अल्पीयान् विमर्शः मया कृतः। तदत्र विद्यमानदोषसमूहो मदीय इति सविनयं निवेदयामि।

प्रीतोऽस्तु कृष्णप्रभुः



# श्रीमधुसूदनौझामहोदयानां वेदे वितर्कसमीक्षणम्

**प्रो० कमलाकान्त त्रिपाठी**

पूर्वमीमांसाविभाग, सं.सं.वि.वि., वाराणसी

वेदमूलासु महर्षिमुनिजनप्रणीतासु सकलास्वेव विद्यासु वेदानामेव परमप्रमाणरूपतयाऽवस्थानं दृश्यते। तथा च, श्रीमधुसूनौझामहोदयोऽपि सर्ववितर्कसमुन्नीतेषु मतेषु कानिचिन्मतानि विहाय वेदानां नित्यसिद्धत्वमङ्गीकुरुते तत्पोषणाय च यथोपलब्धश्रुतिस्मृतिजातमुदाहरति। वेदा नित्यसिद्धा इत्यस्य कोऽर्थ इति प्रथमन्तावज्जिज्ञासा समुदेति। नित्या वेदा इति कथनेनैव यदा तेषामपौरुषेयत्वं सिध्येत् तदा सिद्धेतिशब्दयोजनं कस्मै प्रयोजनायेति विचारणीयमेव। सिद्धरूपा एव न साध्यरूपाः। तदर्थश्च गुरुनये भाट्टनयेऽपि वाऽपूर्वकार्यात्मा साध्यरूपः। एकत्र लिङादिप्रत्ययवाच्यत्वमपरत्र च वेदावधारितस्वर्गयागयोः साध्यसाधनत्वान्यथानुपपत्त्या कल्प्यमानत्वं तस्येत्येतावान् विशेषः। सम्बन्धश्च शब्दार्थयोर्नित्य इति साध्यरूपत्वेऽपि नित्यत्वं न व्याहन्यते। एवं साध्यरूपतां वेदस्य व्यावर्तयितुं नित्यसिद्धो वेद इत्योझामहोदयस्य तात्पर्यं प्रतिभाति। यद्यपि बहवोऽपि पदार्थाः सिद्धस्वरूपा अपि साध्यावस्थामनुभवन्ति 'नासाधितं करणमिति न्यायात् तथापि वेदस्य तद्रूपतापि नास्तीति वक्तुमेवमुच्यते। परमेश्वरनिःश्वासवदयत्नसिद्धत्वात् तस्य। तथा ह्याह ब्राह्मणम्[१]–

**'अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदः'**। इति।

यद्यपीदं परमेश्वरस्याऽचिन्त्यप्रभाववर्णनपरं तथापि वेदस्य लौकिकवाक्यापेक्षया तथाविधमाहात्म्यं नापैति। कोऽसौ वेदः? इतिजिज्ञासायां मन्त्रब्राह्मणात्मकशब्दराशावेव मुख्यत्वं तस्य। वेदशब्दोऽपि द्विधा। एकश्चाऽसा आद्युदात्तः शब्दराशे बोंधकस्तथाऽपरोऽन्त्योदात्तः शयानवत्सजान्वाकृतिदर्भमुष्टिबोधको 'वेदं कृत्वा वेदिं करोति' इत्यत्र। अत एवोञ्छादिगणे ऋष्यादिगणे भगवता पाणनिनाऽपाठि वेदशब्दः। नित्यसिद्ध इति कथनेन नित्यत्वेन यः सिद्धो वर्तते स एव ग्रन्थराशिपरो वेदोऽत्र चर्चाविषयभूतो न कुशमुष्टिपर इत्यायाति। भगवता नारायणेनाऽऽदौ ब्रह्मा चतुरानन उत्पादितो न वेद इत्येवंरूपेण श्रूयते[२]–

**'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।**

**तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये'**।। इति।

उदाजहार मन्त्रवर्णमिमोझामहोदयश्चतुर्थमतप्रदर्शने। अस्यापि मन्त्रस्य तात्पर्यं भगवान् परमपुरुष एव सर्वाभीष्टफलप्रदानसामर्थ्यसम्पृक्तत्वेन भजनीय इत्यर्थ एव, न तु ब्रह्मण उत्पादने तस्मै वेदप्रतिपादने वा। एवं सत्यपि भगवानादिपुरुषो ब्रह्मणो हिरण्यगर्भस्य जनकस्तदीयहृदये वेदनिधापकश्चेति गम्यत एव। भगवान् ब्रह्माणमपि जनयति, न तु वेदानित्येवंरूपेण वेदानां नित्यसिद्धत्वं सिध्यति।

पञ्चममते परमेश्वरप्रसादेन महर्षयो वेदानवापुरित्युक्तम्। अस्मिन् मतेऽपि वेदानां नित्यसिद्धत्वमेव। परन्त्वग्रे श्रीमदोझामहोदयोऽवोचत **'सृष्टेः पूर्वं संभवतो हिरण्यगर्भेणाऽनन्ता वेदा विनिर्मिताः स्युस्तेष्वयं**

**यज्ञवेदो भवति यमद्यत्वे वयमुपलभामहे। नायमनन्तः। अस्य शाखामण्डलमन्त्रपदाक्षराणां परिगणितत्वात्'।** इति। अयमेव यज्ञवेदो भगवदनुग्रहाद् बहूनामृषीणां हृत्पुण्डरीकेषु प्रादुरभूदित्यपौरुषेयत्वं तस्य। अत्र परस्परव्याघातो भवति। हिरण्यगर्भेणाऽनन्ता वेदा निर्मितास्त इदानीमपि नोपलभ्यन्ते यश्च नाऽनन्तो यज्ञवेदस्तमीश्वरानुग्रहादूर्ध्वरेतसो महर्षयः प्रापुरिति। एवञ्च, यस्योपलब्धिरेव नास्ति तस्यानन्त्यं यस्य चोपलब्धिस्तस्यापौरुषेयत्वं परिच्छिन्नत्वं च सिध्यति। यथोपलब्धि पदार्थसत्तावधारणं भवति। उपलब्ध्यभावे तु शशशृङ्गायमाणत्वमेव पदार्थानाम्। इदानीमुपलभ्यमानो वेदो यज्ञवेदस्तथाऽऽनन्त्यं प्राप्तोऽनुपलभ्यमानो वेदोऽयज्ञवेदोऽर्थात् सिध्यति। यज्ञप्रधानो वेदो यज्ञवेदो यज्ञानामेव प्रतिपादक इति गम्यते। स च सर्व एव वेद 'आम्नायस्य क्रियार्थत्वात्' इत्यनेन महर्षिणा जैमिनिनोक्तः। उपलभ्यमानवेदस्यापि सिध्यत्येवाऽऽनन्त्यमत उपलभ्यमानयज्ञवेदादन्येऽनन्ता वेदाः सन्तीति वचनं न रोचते। शाखाबाहुल्यात् तत्र तत्र परिचोदित-क्रियाबाहुल्यान्मन्त्राणां बाहुल्यात्तन्त्रप्रयोगक्रमबाहुल्याद् विविधासु शाखासूच्चारणबाहुल्यात्तथा विचित्राचारबाहुल्याच्चोपलभ्यमानेषु वेदेष्वप्यानन्त्यं वक्तुं शक्यत एव। अत एवाऽऽह मार्कण्डेयः[३]-

**'शाखाबाहुल्यतश्चापि क्रियाबाहुल्यतस्तथा।**
**मन्त्रबाहुल्यतस्तन्त्रप्रयोगक्रमविस्तरैः।।**
**मन्त्रोच्चारणभेदैश्च तदाचारादिकीर्तनैः।**
**अनन्तास्त इति प्रोक्तास्तत्तच्छाखासु वच्मि वः।।** इति।

एवं सत्यपि परम्परयाऽध्येतृभिः शाखिभिस्तेषां बहुलत्वतः सम्यगध्येतुं तत्क्रिया ज्ञातुं तथा सूक्ष्मतस्ता विधातुं शक्यन्त एव। एकेन पुरुषेणाऽज्ञायमानत्वं भवत्येव। अन्यथा मीमांसादिशास्त्राणां विधानमशक्यं स्यात्। तथा हि ज्ञानमनुष्ठानञ्चाऽभिलक्ष्याऽऽह स एव[४]-

**'यवैश्च तण्डुलैराज्यदधिद्रव्यादिभिस्तथा।**
**यवाग्वादिदशद्रव्यैरग्निहोत्रं तु तादृशम्।।**
**एकं दशविधं प्रोक्तं मन्त्रतन्त्रक्रियादिभिः।**
**एतदत्यन्तगहनमशक्यं किमु पश्यत।।**
**कर्तव्यनिश्चितधियामेतदत्यन्तसुन्दरम्।**
**सुलभं सुखदं श्रीमत्त्यक्तकाठिन्यरञ्जितम्।।**
**एवमाचमनं त्वेकं मन्त्रतन्त्रविभेदतः।**
**तैस्तैः शतगुणं प्रोक्तं किमशक्यं तथाविधम्।। इति।**

हिरण्यगर्भश्चतुराननो ब्रह्मैव। ओझामहोदयैश्चतुर्थमते चैतदङ्गीतम्। उदाजहार चेमं मन्त्रवर्णम्[५]-

**'हिरण्यगर्भः समवर्तताऽग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम'।।** इति।

कस्मै हिरण्यगर्भाय ब्रह्मणे हविषा विधेम तपर्यामित्यर्थः। तत्र भाषानुवादे तु कस्मायितिपदस्य सर्वनामत्वमुक्तम्। वस्तुतस्तु को ब्रह्मा। तथा च मन्त्रनिघण्टुः-

**'को ब्रह्मा कामो वैकुण्ठः क्रोधीशो विधिरुच्यते।**
**महाकालीन्दुमान् बाहुः कमलाकर ईश्वरः'**।। इति।

पूर्वं भगवान् ब्रह्माणमेव ससर्ज। एवन्तर्हि 'सृष्टेः पूर्वं सम्भवतो हिरण्यगर्भेणाऽनन्ता वेदा निर्मिता इति कथनं नातीव रोचते। अनेनाऽनुपलभ्यमानस्य ब्रह्मणा निर्मितस्याऽनन्तस्य वेदस्य नित्यसिद्धता नास्तीति गम्यते। उक्तमेतत् पौरुषेयत्वं नाम प्राक्। अपौरुषेयो वेदो क इत्याहुस्ते सृष्टिरचनौपयिकोऽयं वेद इति। अनुपदमेव चतुर्थमत उक्तं तै र्विश्वविज्ञानलक्षणवेदनिर्माणस्येति। एकादशमत उक्तं विश्वपरिस्थितिविज्ञानरूपो नित्यसिद्धोऽयं वेद इति। कथं सृष्टिर्भवतीति ज्ञानं वेदादेव भवति। यतो हि सृष्टिरचनापरिज्ञानोपायभूतो भवति वेदः। विश्वस्य विज्ञानं वेदादेव विश्वस्य परिस्थितिविज्ञानमपि। भवतु तावत् तथा किन्तु प्रत्यक्षादि-लौकिकप्रमाणैरप्येतत् सर्वं ज्ञातुं शक्यते। सूक्ष्मात् पिप्पलबीजाद् विशालाकारो वृक्षः सञ्जायते। एवमस्य विश्वस्य निदानभूतं किमपि तत्त्वं प्रधानपदवाच्यं भवितुमर्हतीति ज्ञातुं शक्यते। तथा च, वितर्कमूलं सांख्यदर्शनं न वेदमूलकमिति तन्त्रावार्तिके भट्टपादैरभ्यधायि। एवं वैशेषिकदर्शनमपि वितर्कमूलमेवेत्युक्तम्। वेदानां तात्पर्यं जैमिनिनयेन साध्यपदार्थावबोधने तथा वेदान्तनय उपनिषदो ब्रह्मणि सिद्धपदार्थेऽपि भवतीत्यनवगतेऽर्थे शास्त्रप्रामाण्यम्। विश्वस्य विज्ञानं प्रत्यक्षादिभिरेव भवितुमर्हतीति संसारस्य ज्ञानाय वेदाः सन्तीति कथं संघटेत? एवन्तर्हि विश्वान्तर्गतं धर्माधर्मजातं ब्रह्माऽपि च भवतीति तेष्वर्थेषु वेदानां प्रामाण्यस्य सिद्धत्वादोझामहोदयानां वचांसि सङ्गमयितुं शक्यन्ते। भवतु तावत्, सृष्टेः कर्ता ब्रह्मा, स च कथं विज्ञानाभावे तां कर्तुं शक्नुयात्, अतः सृष्टिविरचनोपायभूतवेदज्ञानं तस्य परमेश्वरप्रसादादपेक्षितमेव। सत्यम्। सत्यप्येवं सामर्थ्यमपि तथाविधमपेक्षितं वर्तते। न हि सृष्टिविज्ञानमात्रेण तथाविधलोकोत्तरसामर्थ्याभावे कोऽपि सृष्टिं कर्तुं शक्नुयात्। यदि शक्नुयात् तदेदानीमपि कोऽपि वेदात् तद्विज्ञानं सम्पाद्य सृष्टिं कुर्यादेव। अतस्तथाविधलोकोत्तरसामर्थ्यं कल्पनीयमेव हिरण्यगर्भस्य। यथा पञ्चममते बहूनामृषीणां हृदयेषु परमेश्वरानुग्रहेण वेदानां प्रादुर्भावस्तथा षष्ठसप्तममतयोरजपृष्ण्यादिमहर्षिहृदयेषु तथाऽङ्गिरोहृदये वेदप्रादुर्भावः। एवं मतत्रयं प्रकारान्तरेण समानमेव। अष्टममते स्वयमीश्वर एव सृष्टेरादौ वेदसम्प्रदायं प्रवर्तयामास। सम्प्रदायप्रवर्तनमेतद् हिरण्यगर्भद्वाराऽथवा महर्षिद्वारैव सम्भवतीति नात्रापि पूर्वमतापेक्षया विशेषः।

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः**[६]।।

इत्येवमादिवचनजातमत्र मूलम्। नवममते ब्रह्मणश्चतुर्मुखस्य वाक्यं वेदः। यद्येवं तर्हि न नित्यसिद्धा वेदा भवितुमर्हन्ति। यथा रघुवंशः कालिदासस्य वाक्यं नासौ नित्यसिद्धः। नित्यसिद्धत्वं तु वेदस्योक्तं तत्र। तत्र पुराणवचनमेतदुदाहृतं दृश्यते-

**'पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।**
**अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः'**।। इति।

सर्वशास्त्राणां चतुरो वेदान् विहाय वेदमूलानां षडङ्गधर्मशास्त्रपुराणमीमांसान्यायविद्यानां मध्ये ब्रह्मणा हिरण्यगर्भप्रजापतिविध्यादिपदवाच्येन चतुर्वदनेन प्रथमं पुराणं स्मृतं वेदेषु काः का विद्या निःश्रेयसप्रधानाः सन्तीति पुराणरूपेण स्मृत्वा विनिर्ममे, पश्चाच्च तस्य चतुर्भ्य आननेभ्यो वेदा विनिर्गता इत्याशयकस्य श्लोकस्य तात्पर्यमेवमाहुस्ते-

**'यथा नित्यसिद्धानि पुराणानि भगवान् कृष्णद्वैपायनो वेदव्यासो लोके प्रवर्तयामास, न तु चकार, एवमेवायं भगवान् ब्रह्मा प्रजापतिरेतान् वेदान् लोके प्रवर्तयामास, न तु निर्ममे'।** इति।

यदि वेदा इव पुराणान्यपि नित्यसिद्धान्येव भवेयुस्तदा वेदेभ्यस्तेषां को विशेषो भवेत्? न कोऽपीति चेन्न। तथा सति स्मृत्यधिकरणविरोधाधिकरणादिभिर्विरोधः स्यात्। स्मृत्यधिकरणे पुराणादिविद्यानां वेदमूलकत्वेनैव प्रामाण्यं स्थापितम्। अतन्मूलकत्वे च न प्रामाण्यं तासामिति विरोधाधिकरणे स्थितम्। वेदतुल्यं प्रामाण्यं स्मृतीहासपुराणानां निराकृतं कल्पसूत्राधिकरणे। पुराणं स्मृतमित्यनेन वैदिकमेव स्मरणं मन्तव्यं ब्रह्मणः। अन्यथाऽप्रामाण्यापत्तेः। एवञ्च, वेदानामपौरुषेयत्वं स्मृतिपुराणादीनां पौरुषेयत्वञ्च सिद्धं भवति। अत्रापि पूर्वमततुल्यतैव। दशममतेऽपि वेदस्य नित्यसिद्धत्वेऽपि तपोबलादीश्वरानुग्रहं विनैवर्षिविज्ञानं जातमिति सम्प्रदायपरम्परया पुनःपुनरभ्यासाद्विज्ञानोद्भवोऽस्ति। एकादश ईश्वरज्ञानराशिर्वेदस्तदनुरूपमेव प्रतिकल्पं सर्ग इत्युक्तम्। द्वादशमतं वेदान्तिनामस्ति। अत्रापि वेदा नित्यसिद्धा एव तदनुसारेणैव भगवानीश्वरो जगन्निर्मातीति कल्पितमस्ति। त्रयोदशे मते वेदान्तपरिभाषारीत्या वेदानां नित्यसिद्धत्वमिति न पूर्वस्मान्मताद्विशेषः। यत्किञ्चिद्वैलक्षण्ये त्वनन्तानि मतानि भवेयुः। एवं त्रयोदशमतैर्वेदानां नित्यसिद्धत्वं प्रतिपाद्य सप्तसु मतेषु वेदानामीश्वरकर्तृकत्वमुक्तम्। नैयायिका वेदानां पौरुषेयत्वमीश्वरसद्भावसिद्धये प्रसाधयन्ति। न हि लोकोत्तरवस्तुरूपवेदकर्ता मर्त्यः कोऽपि संभवेत्। अतस्तत्कर्ता कोऽपि सर्वशक्तिसमन्वितः सर्वज्ञ ईश्वरः सिध्यति।

**'प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते'** इत्येवमादिपुराणमतमाश्रित्य चतुर्दशमतमायातम्। पञ्चदशमतेऽपि परमाणुसंयोगेन भौतिकसृष्टिवच्छब्दसंयोजनेन वेदमीश्वरो निर्मातीत्युक्तम्। एकत्रोक्तं वेदग्रन्था अप्यनित्याः सन्ति तथा तत्रैवोक्तं नित्यैःशब्दैरात्मयोगेन चैतान् वेदानजनयदिति। इत्थमेकत्रैव नित्यानित्यत्वविरोधः। षोडशे मते सर्वतन्त्रस्वतन्त्रो भगवान् स्वेच्छाशक्तिप्रभावाद् वेदं जगच्चोत्पादयति। मन्ये चैतच्छैवागममतम्। **'प्रजापतिस्तपोऽतप्यत तस्मात्तेपानाच्चत्वारो वेदाऽजायन्त'** इत्येवमादिवचांस्यस्मिन् पक्ष उदाहृतानि। ईश्वरस्यातर्क्यैश्वर्यशालित्वात् सकलवस्तुनिर्माणं संभवेदेव। सप्तदशमते निराकार ईश्वरो जीवस्य कस्यचिद्धृदये प्रादुर्भावयन्नेव तदुपदेशश्रवणद्वारैव लोके प्रवर्तयतीत्युक्तम्। मतेऽत्र चतुर्थादिमतेभ्यो न विशेषः प्रतिभाति। अत्रापीश्वरानुग्रहस्य स्वीकारात्। अष्टादशमतमप्येवम्। अग्निवायुसूर्यदेवताद्वारा वेदमाविर्भावयतीति विशेषः। ऊनविंशमते त्रयाणां देवानां मध्ये सूर्यादेव त्रयीमजीजनद्वेदमित्यस्ति। विंशमते नानादेशीया ऋषय एव नाना शाखा अकल्पयन्नित्युक्तम्। एकविंशमते परमेश्वरावतारकृता वेदा इति न्यगादि। अवतारस्यावतारिणो-ऽनन्यत्वान्नैयायिकमतमेवैतत् पूर्वोक्तम्।

इत्थं वेदविषये यत्किञ्चिद्विशेषस्वीकारपूर्वकवेदविषयिणी चर्चा श्रीमधुसूदनौझामहोदयस्याऽस्ति। वेदानामस्मत्साहित्ये सर्वोत्तमं स्थानमस्ति। तस्य तथा प्रभावो विराजते यथा यद्विरुद्धान्यवाङ्मयस्या प्रामाण्यमपि निर्गलति। ईश्वरप्रसादेन ब्रह्मा महेन्द्रो बृहस्पतिस्तथा परमर्षीणां मध्ये कोऽपि महर्षिरथवा सर्व एव महर्षयो वेदरचनाकाराः स्युर्वस्तु त्वेकमेव। यदि परस्परं मतानां भेदस्तदा तेषां समाधानमपि सत्तर्कमाध्यमेन कार्यमेव। एकं मतं प्रतिपाद्य यदि द्वितीयस्य मतस्य प्रतिपादनमिष्यते तदा प्रथममतस्य कौशलपूर्वकं खण्डनं कार्यमेव। यदि खण्डनं न क्रियते तदा प्रथममेव मतमनपोदितप्रमाणमवतिष्ठेत। एवन्तर्हि कृतं नानामतप्रस्तावेन। यथा मन्त्रवर्ण आह तथैव मन्तव्यम्। सन्ति वेदविषये बहवोऽर्थवादा मन्त्रवर्णाश्च यत्र विभेदो भूयानिव सन्तिष्ठते। एवन्तर्हि परस्परव्याघात् तेषामप्रमाण्यं मन्तव्यमथवा तात्पर्यविशेषमङ्गीकृत्य गतिश्चिन्तनीया। अप्रमाण्यन्तु नास्ति। तत्कारणदोषज्ञानबाधकज्ञानयोरभावात्। यथा– 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यनेन वाक्येनाग्निहोत्रहोमात्

स्वर्गो भवतीत्यबाधितमेव प्रतीयते। तेषामोझामहोदयानां सुदृढः सम्प्रत्यस्तदीयचेतसि यद्वेदा सृष्टिविज्ञानविषया इति। एष तेषां विश्वासः सकलशिष्टपण्डितसम्प्रदायविरोधादुपेक्षणीय एव। धर्माधर्मपरब्रह्मोपासन–तात्पर्यव्यतिरिक्ततात्पर्याभावात्। धर्माधर्मयोरेव तात्पर्यं वेदानामिति भगवतो जैमिनेर्मतम्। ब्रह्मण्यपि तात्पर्यमस्तीति भगवतो वादरायणस्य मतम्। प्रायो मन्वादयः समे महर्षयो वेदानां शाश्वतिकीं सत्तामङ्गीकुर्वन्ति। अत एव वेदेषु विज्ञानान्वेषणप्रयासो धर्मनिरपेक्षतावादं परिपोषयितुमागत इति सर्वे शिष्टा मन्वते। भाषाविज्ञानमप्येतत्प्रयोजनकमस्ति। एवमिदानीं यद् वैदिकविज्ञाननिकेतनस्थापनं कतिपयपण्डितजनरसनासु निपतदमृतायमानं दृश्यते तदपि वेदानां मुख्यतात्पर्यात् सुकुमारधियां मनो व्यावर्तयितुमेव विद्यते। यथा वेदेषु महर्षीणां दृष्टिस्तथैव समीचीनम्। चोदनानां प्रामाण्यमेव प्रमाणलक्षणविषय इति यदा स्थापितं प्रभाकरमिश्रेण तदैवंविधभूयोमतप्रदर्शनप्रयासोऽकिञ्चित्कर एव। सर्वथा वेदानामनपेक्षप्रामाण्यमेव धर्माधर्मपरब्रह्मप्रतिपादने मन्तव्यमिति शम्।

**सन्दर्भग्रन्थाः-**


१. बृहदारण्यकोपनिषदि- २/४/९०।

२. श्वेताश्वतरोपनिषदि- ६/१८।

३. मार्कण्डेयस्मृतिः- पृष्ठसंख्या- ६५ (नागप्रकाशनप्रकाशितस्मृतिसन्दर्भे)।

४. तत्रैव- ६५ तमे पृष्ठे।

५. ऋग्वेदे- १०/१२१/१

६. महाभारते शान्तिपर्वणि- २३३/२४




# नारायणभट्टकवेः धातुकाव्यम् इति लक्ष्य-लक्षणात्मकस्य शास्त्रकाव्यस्य वैलक्षण्यपरिशीलनम्

**डॉ. के. आञ्जनेयुलु**
संस्कृतविभागः, उस्मानिया विश्वविद्यालयः, हैदराबाद, तेलङ्गाणा

"चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च" इति निरुक्तवचनानुसारं संस्कृतभाषायां सामान्यतः नामाख्यातोपसर्गनिपातेषु नाम पदं सुबन्तम्, आख्यातं पदं तिङन्तञ्चेति व्यवह्रियते। पदसमूहे वाक्ये तेषां चतुर्णां पदजातानां क्रियारूपः तिङन्तः एव प्रधान इति विदुषामभिमतम् तथापि पदसमूहे वाक्ये तिङन्तरूपस्य धातोः, धातोरर्थविषये विभिन्नवादाः श्रूयमाणास्सन्ति। तद्यथा मीमांसा-न्यायसिद्धान्तानुसारिणः फलमात्रं धात्वर्थः, आख्यातार्थः कृतिः, फलव्यापारौ धातुवाच्यौ कृतिराख्यातार्थः इति, वैय्याकरणाः फलव्यापारयोः धातुवाच्यत्वमिति, अन्ये च केचन फलमात्रं धात्वर्थः प्रत्ययार्थो व्यापारः, फलव्यापारौ धातुवाच्यौ भावना आख्यातार्थ इति च अभिप्रयन्ति। किञ्च 'भावप्रधानमाख्यातं, सत्त्वप्रधानानि नामानि" इत्यनुसारं वाक्यार्थे तिङन्तरूपक्रियैव प्राधाना इति निर्विवादांशः। दधाति विविधं शब्दरूपं यः स धातुः अतः धातोः प्राधान्यमनुसृत्य पाणिनिमहर्षिणा अष्टाध्याय्यां विस्तरेण विचारितम्। तथैव धातुपाठे उपदेशरूपेण प्रायः द्विसहस्रमिताः धातवश्च पठिताः। ते सर्वेऽपि विकरणप्रत्ययभेदेन भ्वादि, अदादि, जुहोत्यादि, दिवादि, स्वादि, तुदादि, रुधादि, क्र्यादि, तनादि, चुरादि चेति दशगणेषु निर्दिष्टाः। तेषु औपदेशिकाः, आतिदेशिकाः चेति द्विप्रकारकेषु प्रत्येकः धातुः मूलरूपात् परिवर्तितो बहुविधक्रियारूपान् निष्पादयति। सनाद्यन्तादिभिः कृत्प्रत्ययैश्च एकस्य धातोः अनन्ताः प्रयोगाः सिद्ध्यन्ति। तद्ज्ञानेनैव बहवः शास्त्रपारङ्गताः वैय्याकरणपण्डिताश्च बहुधा प्रयोगप्रदर्शनपूर्वकं धातोः विश्लेषणं कुर्वन्तः भट्टि-भूमभट्ट-हलायुधादयः शास्त्रपण्डिताः धातूनां लक्ष्यमुखेन उदाहर्तुं रावणवधः, कविरहस्यमित्यादि काव्यान्यप्यलखिन्। तत्क्रमे नारायणभट्टः अपि धातुकाव्यम् अलिखत्। एतादृशकाव्यानि शास्त्रकाव्यम् इति, तेषां रचयितारः शास्त्रकाव्यप्रणेतार इति संस्कृतगवेषकैः प्रस्तावितम्। तद्यथा-

**व्याडिर्मुनित्रयं भट्टिर्भट्टभूमो हलायुधः।**
**हेमचन्द्रो वासुदेवस्तथा नारायणावपि।।**
**शास्त्रकाव्यप्रणेतारः शाब्दिकाः कवयः स्मृताः।।**

मुनित्रयम्, व्याडिः, भट्टिः, भट्टभूमः, हलायुधः, हेमचन्द्रः, वासुदेवः, नारायणश्चेत्यादिवैय्याकरणाः जाम्बवतीपरिणयम्, महाबलचरितम्, स्वर्गारोहणम्, कविरहस्यम्, कुमारपालचरितम्, वासुदेवविजयम् इत्यादि ग्रन्थानामाधारेण शाब्दिककवय इति परिकीर्तितेषु त्रयो मुनय एव आद्याः शास्त्रकाव्यकाराः। ततः एव शास्त्रकाव्यानां विकासः परिविस्तृतो सञ्जात इति ज्ञायते। अतः शास्त्रकाव्यवाङ्मये किं नाम शास्त्रकाव्यम् इति जिज्ञासिते न क्वापि इदमित्थन्तया निर्दिष्टरूपेण प्रमाणानि उपलभ्यन्ते। किन्तु "यत् किमपि कथावस्तु

परिगृह्य व्याकरणादिशास्त्रेषु निर्दिष्टान् नियमान् अनुसृत्य तान् पुनः पाठकानवगमयितुं नैकान्युदाहरणानि च काव्ये प्रयुज्य कृतं काव्यमेव शास्त्रकाव्यम्'' इति वक्तुं पारयामः। शास्त्रकाव्यस्यैव लक्ष्योदाहरणकाव्यम् उदाहरणकाव्यम् इति नामान्तरैश्च संज्ञा कृता दृश्यते। संस्कृतवाङ्मये शास्त्रकाव्यस्योद्भवः, तस्य विकासश्च अस्मिन्नेव शोधप्रबन्धे पूर्वाङ्के (द्वितीयाङ्कः-२०१५) मया एव विस्तरेण विचारितमस्ति। अतः अस्मिन् प्रबन्धे पुनः न प्रस्तूयते। साक्षात् धातुकाव्यस्य वैलक्षण्यमेव प्रस्तोष्यते।

## धातुकाव्यस्य परिचयः

प्राचीनकाले भट्टिभूमभट्टादिभिः कृतं शास्त्रकाव्यसम्प्रदायम् अनुसृत्य १५-१६ शताब्दौ केरलप्रान्ते स्थिताभ्यां वासुदेव-नारायणभट्टाख्याभ्यां कविभ्यां भगवतः वासुदेवस्य कथामुखेन पाणिनीयशब्दानुशासनस्य लक्ष्यमुखेनोपपादयितुं वासुदेवविजयम्, धातुकाव्यम् इति काव्यद्वयं रचितम्। काव्ययोः श्रीमद्भागवतमहापुराणस्य दशमस्कन्धभूदेव्याराधानात् कंसवधपर्यन्तं (१-४४ अध्यायाः) इतिहासकथैव दृश्यते। यदा कदाचित् यथोचितं कव्योः परिकल्पना च दरीदृश्यते। प्रथमे वासुदेवविजये सप्तसर्गेषु १-३७ अध्यायानां कथा वर्णिता। अस्मिन् ग्रन्थे कथामाध्यमेन पाणिनीयाष्टाध्याय्याः सूत्रोदाहरणानि काव्योचितं प्रस्तुतानि। द्वितीये धातुकाव्ये त्रिषु सर्गेषु ३८-४४ अध्यायानां कथा वर्णिता। नारायणभट्टः सप्तसर्गात्मकवासुदेवविजये त्यक्तम् इतिवृत्तमादाय अक्रूरस्य वृन्दावनाभिगमनादारभ्य मथुरायां कंसवधपर्यन्तं त्रिषु सर्गेषु धातुकाव्यं समापयति। अत्र एकैको सर्गः एकदिवसात्मकः।[1] तेषु पाणिनीयधातुपाठान्तर्गताः प्रायः द्विसहस्रधातवः गुणनिर्दिष्टाः ससन्दर्भं लक्ष्यमुखेन यथाक्रममुदाहृताः।[2] तत्रापि वृकोदरप्रणीतधातुपाठक्रमम् अनुसृतवानिति प्रामाण्यमुपलभ्यते।[3] वृकोदरधातुपाठक्रमे पाठभेदात् व्याकुलो 'माधवाश्रयादिति' निश्चित्य धातुकाव्यमरचयदिति ज्ञायते। तद्यथा-

**उदाहृतं पाणिनिसूत्रमण्डलं प्राग्वासुदेवेन तदूर्ध्वतोऽपरः।**
**उदाहरत्यद्य वृकोदरोदितान्धातून् क्रमेणैव हि माधवाश्रयात्।।**

एवं नारायणभट्टः धातुकाव्ये माधवीयधातुवृत्तिराश्रिता तथापि समायानुसारं, कथाकथनार्थम्, मनोवृत्तिं च प्रकाशयितुं धातूनां तेषामर्थान् परिवर्त्य न्यवेशयदित्यवगम्यते। काव्यप्रयोगेषु क्वचित्स्थलेषु प्राधानमर्थं त्यक्त्वा अप्राधानार्थे परिवर्तितार्थे वा धात्वर्था ग्राह्या इति ज्ञायते। किन्तु केवलधातुपाठक्रमेण कथं वा काव्यं कर्तुं शक्यते, तस्मिन् सहृदयाह्लादः जन्यते न वेति सर्वेषां शङ्का जायते। तादृशीं शङ्कामपाकर्तुं सम्पूर्णधातुकाव्ये श्लोकेषु धातोः समन्वयः कीदृश इति सोदाहरणमुपपाद्यते।

माधवीयधातुवृत्तिदृष्ट्या धातुकाव्यस्य स्वरूपं यथा-

| सर्गः | श्लोकसंख्या | धातुपाठः | मा.धा.वृ. गणविभागशः प्रयुक्ताः धातवः |
|---|---|---|---|
| प्रथमसर्गः | १.१-१.९२ | भ्वादिः | १-७४० |
| द्वितीयसर्गः | २.१-२.४३ | भ्वादिः | ७४१-१०१० |
| | २.४४-२.५३ | अदादिः | १०११-१०८२ |
| | २.५४-२.५५ | जुहोत्यादिः | १०८३-११०६ |
| | २.५६-२.६७ | दिवादिः | ११०७-१२४६ |

|  |  |  |  |
|---|---|---|---|
|  | २.६८–२.७१ | स्वादिः | १४४७–१२८० |
|  | २.७२–२.८४ | तुदादिः | १२८१–१४३७ |
| तृतीयसर्गः | ३.१–३.३ | रुधादिः | १४३८–१४६२ |
|  | ३.४ | तनादिः | १४६३–१४७२ |
|  | ३.५–३.१२ | क्र्यादिः | १४७३–१५३२ |
|  | ३.१३.३.६६ | चुरादिः | १५३३–१९४७ |

इत्येवं धातुकाव्ये भू इत्याद्यारभ्य त्रिषु सर्गेषु २४६ श्लोकेषु १९४७ धातवः सनिपुणं काव्योचितं भिन्नप्रकारेण कथानुगुण्यमेवोपन्यस्ताः। ते च माधवीयधातुवृत्तिक्रममनुसृत्यैव गणनिर्दिष्टाः, अन्तर्गणेषु निर्दिष्टाः धातवश्च सन्दर्भानुसारमुपन्यस्ताः। तेषां प्रस्तुतौ च प्रत्येकस्य गणस्यारम्भः न क्वचिदपि श्लोकमध्ये अथवा एकस्मिन् श्लोके वा द्वयोः गणयोः धातवः उदाहृताः। प्रायः प्रत्येकस्य श्लोकस्यारम्भे एव दशसु लकारेषु परस्मैपद आत्मनेपदे च कृदन्तादि प्रत्ययानां सहयोगेन प्रयुक्ताः। क्वचिच्च कथानुगण्यं सन्दर्भानुसारं वा विशेषार्थस्य बोधनाय सोपसर्गमुदाहृताः। तस्मात् प्रकृतशोधांशे धातुकाव्यस्य प्रायोगिकमौचित्यं किमिति प्रमाणपुरस्सरं विचार्यते।

## अर्थवैशिष्ट्यदृशा धातुप्रयोगाणां परिशीलनम्

पाणिनीयधातुपाठे शतशः धातवः एकार्थे ब्रह्वर्थे च पठ्यन्ते। प्रक्रियादशायां तेषामेव प्रामाणिका अन्ये अर्था अपि ज्ञेयाः। तद्यथा पतञ्जलिमहर्षिणा "अग्नौ परिचाय्योपचाय्यसमूह्याः[४]" इति सूत्रभाष्ये विचारयति यत् "ऊहिरपि वह्यर्थे वर्तते, कथं पुनरन्यो नामान्यस्यार्थे वर्तते? कथमूहिर्वह्यर्थे वर्तते? बह्वर्थाः अपि धातवो भवन्ति" इति। न्यासे च "सत्यपि हि शब्दार्थत्वे भिद्यते एवैषामभिधेयम्। तथा हि–कवतिस्तावदव्यक्ते शब्दे वर्तते। उष्ट्रः कोकूयत इति। कुवतिरप्यार्तस्वरे वर्तते। चोकूयते वृषल इति। पीडित इत्यर्थः। कौतिस्तु शब्दमात्रे। तस्माद्विशिष्टार्थस्य परिग्रहः" इति प्रस्तावितम्।[५] अतः अर्थनिर्देशे कृतेऽपि अर्थविशेषे क्वचित् सामान्यत एव पर्यवसानं भवति। एतत्सर्वमभिप्रेत्यैव अभियुक्तैरुक्तानां धातवश्चोपसर्गाश्च निपाताश्चेति ते त्रयः। अनेकार्थाः स्मृताः प्राज्ञैः पाठस्तेषां निदर्शनम्। इत्यादीनां प्रामाण्यवचनानाम् अनुसारं धातूनां प्रायः नानार्थत्वं याथातथ्यमूह्यते। तदनुसारमेव माधवीयधातुवृत्तौ पठितानां क्वचित्सन्दर्भेषु परिवर्तितार्थे अप्राधान्यार्थे वा धात्वर्था ज्ञेया इति काव्यालोचनेनावगम्यते।[६] अत एव अर्थदृष्ट्या धातवः के, तेषां प्रयोजनादिकञ्च किमिति सोदाहरणं परिशील्यते।

## बह्वर्थकधातुप्रयोगाः

ज्ञा इति धातोः मा.धा.वृ. मारणतोषणनिशामनेषु वा चेत्यर्थाः निर्दिष्टाः। काव्ये तावत् मारणार्थे संज्ञिपता इति, तोषणार्थे विज्ञपयेम इति, निशामने (प्रदर्शनार्थे) प्रज्ञपयेत् चेति त्रिष्वर्थेषु काव्योचितमुपन्यस्तः। यथा–

**प्रह्मल्यचित्तां स्मरयत्यसौ मां नन्दात्मजं संदरकः खलानाम्।**
**अनारि येन श्रपितं पयोऽपि बालैर्मुहुः संज्ञपितासुरेण।।**
**तमेव किं विज्ञपयेम मारं येनाच्युतं प्रज्ञपयेन्न बाणान्।**
**करे सरोजं चलयेन्न चाल्यः स किं मुरारिश्छदयेत्पुनर्नः।।**

धा.का. २.११, १२ इति।

माधवीयधातुवृत्तौ नाधृ इत्यनयोः ऐश्वर्यमाधिपत्यं नियन्तृत्वं चेत्यर्थाः पठ्यन्ते। काव्यप्रस्तुतौ नाधितलोकनाथकम् इति प्रयोगस्य नाधितलोकस्य उपतप्तजनस्य नाथकमीशितारं रक्षकमिति, नाधितस्य प्रार्थितस्य निजलोकस्य आशीरूपेणानुग्रहीतारञ्चेति बोध्यन्ते। यथा–

**स गान्दिनीभूरथ गोकुलैधितं स्पर्धालुधीगाधितकार्यबाधिनम्।**
**द्रक्ष्यन्हरिं नाधितलोकनाथकं देधे मुदास्कुन्दितमन्तरिन्द्रियम्।।**[७] इति।

अत्रैव मा.धा.वृ. आप्रवणार्थक स्कुदि इति धातुः अस्कुन्दितम् इति प्रयोगस्य आप्लवनमुत्प्लुत्य गमनमिति तरङ्गिण्याः, उद्धरणं वा भोजस्य[८] च मतानुसारं भिन्नार्थाः ग्राह्यन्ते।

एवमेव क्वचित्सन्दर्भेषु भिन्नार्थधातूनाम् पृथग्रूपेण सङ्गृहीतः दृश्यते। यथा धुक्ष धिक्ष इत्यनयोः माधवीयधातुवृत्तौ सन्दीपनक्लेशनजीवनेषु इति भिन्नार्थाः विद्यन्ते। परं काव्ये धुक्ष इति धातोः सन्दीपनार्थे सन्धुक्षमाण इति, क्लेशकदाहकार्थे धिक्षकम् इति च पृथग्रूपेण प्रयुक्तौ। यथा–

**संधुक्षमाणमरिधिक्षकमूष्मजालं संवृक्ष्यवेदमतशिक्षकभिक्षुगम्यम्।**
**संक्लेशितस्वकथदक्षणदीक्षितं तं प्रेक्ष्यैव जन्मफलमीषितवान्महात्मा।।**[९] इति।

यथा चान्यत्र मा.धा.वृ. रक्षण–गति–कान्ति–प्रीति–तृप्त्य–वगम–प्रवेश–श्रवण–स्वाम्य–सामर्थ्ययाचन–क्रियेच्छा–दीप्त्यवाप्त्यालिङ्गन–हिंसादह–भाववृद्धिषु इति रक्षणाद्यष्टादशसु अर्थेषु पठितस्य अव इति धातोः केवलं रक्षणार्थे एव अवन्तम् इति प्रयुक्तम्।[१०] एवं बह्वर्थकधातूनां नैकविधप्रयोगाः काव्यान्तं यावत् काव्योचितं प्रयुक्ताः संलक्ष्यन्ते।

## एकार्थकधातुप्रयोगाः

पाणिनीयधातुपाठे बह्वर्थकाः इव शतशः धातवः समानार्थकाः एकार्थकाश्च संलक्ष्यन्ते। ते सर्वे प्रायः श्लोकेषु काव्योचितमेव निविष्टाः। यथा वृन्दावनगमनमार्गे श्रीकृष्णदर्शनोत्सुकस्य अक्रूरस्य स्वानुभवव्यक्तीकरणे तस्य सन्तोषातिशयप्रकटने च अकूर्दत, खूर्दकैः, वनान्तगूर्दी, रिपुगोदसूदी इति क्रीडार्थकाः कुर्द, गुर्द, गुद इतिचत्वारो धातवः क्रीडार्थे, तथैव हिंसाहिंसायाम् इत्यर्थद्वये क्षरणार्थकः षूद इति धातुः रिपुगोदसूद्यसौ इति श्लोके हिंसार्थे च एकत्रैव काव्योचितमुपन्यस्तः। तद्यथा–

**मुदा स चेतो ददे चिरं हरौ स्वादात्सुरैः स्वर्दितमङ्गलोर्दने।**
**अकूर्दतेवास्य पुरः स्वखूर्दकैर्वनान्तगूर्दी रिपुगोदसूद्यसौ।।**[११]

अत्र च माधवीयधातुपाठे ष्वद स्वर्द इत्येतौ आस्वादने[१२] अर्थे पठितौ द्वौ आस्वादनार्थे एव स्वादात्, स्वर्दित इति प्रयुक्तौ। एवञ्च वृन्दावनात् प्रत्यागमने अक्रूरेण सह रथारूढस्य कृष्णस्य अवस्थावर्णनसन्दर्भे तस्य दिव्यत्वं द्योतयन्तः दीप्तार्थे पठित दुभ्राजृ दुभ्राशृ टुभ्लाशृ इति त्रयः धातवः क्रमेण भ्राजिष्णुभिः, भ्राशित, भ्लाशितश्चेति एकत्रैव प्रयुक्ताः।[१३] अन्यत्र श्रीकृष्णमथुरागमनवेलायां सुखासनस्थस्य कंसस्य स्वरूपकथने हिंसार्थकाः तृहू स्तृहू तृन्हू इति च त्रयः चैकत्रैव ततर्ह, स्तृढ, तृंह इति प्रयुक्ताः।[१४]

तथैवान्यत्र भाषार्थकाः पट पुट लुट तुजि मिजि लुजि भजि लघि त्रसि विसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोचृ लोकृ णद कुप तर्क वृतु वृधु इति विंशत्यधिकाः धातवः क्रमशः त्रिषु श्लोकेषु समन्वयं कृत्वा उदाहृताः।[१५] एवमेव तृतीयसर्गे मल्लयुद्धक्षेत्रस्य योद्धॄणां च वर्णनसन्दर्भे

भाषार्थका: रुट लजि अजि दसि भ्रशि रुसि रुशि इत्यादि पञ्चदश धातव: क्रमेण द्वयो: श्लोकयोरेव प्रयुक्ता:।१६ एवं क्रमानुसारमेकार्थका: नैके धातव: द्वित्रेषु श्लोकेषु, अत्याधिक्येन चतुर्षु श्लोकेषु प्रयुक्ता:१७ सन्दृश्यन्ते।

### अप्राधान्ये परिवर्तितार्थे वा धातुप्रयोगा:

'माधवाश्रयादिति' निश्चित्य नारायणभट्टेन धातुकाव्ये माधवीयधातुवृत्तिराश्रिता तथापि समयानुसारं, कथाकथने स्वमनोवृत्तिं प्रकाशनार्थं धातूनां तेषामर्थाश्च परिवर्तिता इत्यवगम्यते।[१८] धातुप्रयोगेषु क्वचित्स्थलेषु प्राधान्यमर्थं त्यक्त्वा अप्राधान्यार्थे परिवर्तितार्थे वा ग्राह्या:। अत: परिवर्तिताप्राधान्यार्थेषु धातुप्रयोगा: इत्ययमंश: प्रकल्प्य विशदं विचार्यते।

निमेषण: सङ्कोचनश्चेत्यर्थे पठिता: मील श्मील क्ष्मील इति धातव: काव्ये निमेषण: सङ्कोचनश्चेति प्राधान्यमर्थमुपेक्ष्य उत् इत्युपसर्गसहितम् उन्मीलनश्मीलन, उत्स्मीलितक्ष्मीलित: चेति तिरोधान (अप्रकाशनम्) इत्यप्राध्यान्यार्थे प्रयुक्ता:। यथा–

**उन्मीलनश्मीलनलीलया दृशोरुत्स्मीलितक्ष्मीलितविश्वविष्टपम्।**

**पिच्छस्रजा पीलितनीलकुन्तलं शीलेन संकीलितलोकमानसम्।।[१९] इति।**

तथैव चान्यस्मिन् श्लोके लुट विलोटने इति माधवीयधातुवृत्तौ पठित: धातु: लुल इत्यन्येन च ल्युटि लोटन इति, च प्रयुक्तौ। तद्यथा–

**कचिद्भटाधिष्ठितवेदिकातटान्क्वचिच्च खट्वाविहरन्नटीजनान्।**

**क्वचिच्च पेटीशतपूर्णहाटकान्क्वचित्सटालोटनलोलघोटकान्।।**[२०] इति।

अन्यत्र च गतिस्थानार्जनोपार्जनेषु ऋज इत्ययं धातु: मैत्रेयपाठानुसारं गतिस्थानार्जनोपार्जनेषु इति, क्षीरस्वामि–धनपाल–शाकटायनादीनामनुसारम् ऊर्जनेषु वेति पठ्यते। काव्ये अर्जनं (स्वीकार:), ऊर्जनं (शक्तिप्राप्ति: प्राणनञ्च) चेत्याद्यर्था: सङ्गृह्य शुभार्जकै: इति प्रयुक्तम्। यथा–

**अमुञ्चनैर्मञ्चितचित्तपञ्चितत्रयीमतप्रस्तुचितै: शुभार्जकै:।**

**ससृञ्जितं कन्दमभृक्तसत्फलान्यदद्भिरेकत्र यदेजितं जनै:।।**[२१] इति।

अनेनैव प्रकारेण परिवर्तितार्थे अप्रधान्यार्थे वा धातूनां नैकप्रयोगा: धातुकाव्ये सन्दृश्यन्ते।

### सोपसर्गकधातुप्रयोगा:

उप इत्युपसर्गपूर्वकात् सृज विसर्गे इत्यस्माद्धातो: घञि प्रत्यये कृते सति उपसर्ग: इत्यस्य निष्पत्तिर्भवति। अनया निष्पत्त्यैव शब्दकल्पद्रुमकारा: कथयन्ति यत् धातो: पूर्ववर्तिनो विंशतिसंख्याका: प्राद्यव्ययभूता: उपसर्गा: शब्दशास्त्रं वैदिकं लौकिकं च वाङ्मयं व्याप्नुवन्ति इति। उपसृज्यते धातो: समीपे क्रियते इत्युपसर्ग:। विषयेऽस्मिन् भगवता पाणिनिना स्वाष्टाध्यायां प्रादय: (अष्टा. १.४.५८), उपसर्गा: क्रियायोगे (अष्टा: १.४.५९) इति सूत्राभ्यां वैज्ञानिकसरणिमधिकृत्य चर्चितमस्ति। उपसर्गा: क्रियायोगे इति सूत्रेण प्र, परा, अप इति प्रादय: उपसर्गाश्चेति नाम्ना व्यवहारे नियतश्रेण्यां संख्यायन्ते। तेषां क्रियायोगे उपसर्गसंज्ञा विधीयते। उपसर्गसंज्ञका: धातो: प्रागेव प्रयोक्तव्या:। यद्यपि वेदे धातूपसर्गकयो: पदान्तरेण व्यवधानं वा, पौर्वापर्यनियमविरोधेन प्रयोगो वा दृश्यते। लौकिकप्रयोगे तावत् पूर्वमुपसर्ग: पश्चात् भू सत्तायाम्, एध वृद्धौ, स्पर्ध सङ्घर्षे

इत्यादीनाम् योगे परस्मैपद–आत्मनेपद, सकर्मक–अकर्मकादिषु परिवर्तनम्, अर्थभेदश्च सञ्जायते। यथा डुकृञ् करणे, रमु क्रीडायाम् इति धातवः उपसर्गाणां योगे– शिष्यः गुरुमनुकरोति, देवदत्तः धर्मं पराकरोति, तथैव–स पापात् विरमति, अनेनैव प्रकारेण आरमति, परिरमति, उपरमति इत्यादि प्रयोगाः धातोः तिङन्तरूपैः, कृदन्तशब्दैश्च अर्थं सर्वथा परिवर्तयन्ति। सम्यगुक्तम् यत्–

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। विहाराहारसंहारप्रहारपरिहारवत्''[२२] इति, अन्यत्र– प्रहारहार संहार विहार परिहारवत्।। इति। तस्माच्च इदमूह्यते यत् उपसर्गा धातुभिर्योगे अर्थवैलक्षण्यं भजत इति। तच्च त्रिप्रकारकं भवितुं शक्यते। १. कश्चिदुपसर्गो धात्वर्थं बाधते। यथा प्रभवति। २. कश्चिदुपसर्गो धात्वर्थस्यानुगमनं करोति। यथा सम्भवति। ३. कश्चिच्च उपसर्गस्तमेव धात्वर्थं विशिनष्टि। यथा अनुभवति। अभियुक्तैरुक्तं च यथा–

**धात्वर्थो बाधते कश्चित् कश्चित् तमनुवर्तते।**
**विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा।। इति।**

उपसर्गा धातुभिर्योगे काव्यस्य शब्दसौष्ठवस्य वाक्यविन्यासस्य च यथोपकारं कुर्वन्ति। तस्मात् धातुकाव्यस्यौन्नत्यमुपपादयितुं नारायणभट्टः नैकान् धातून् सोपसर्गमुदाहृतवान्। यथा–

१. चर्च अध्ययने इति धातुः इत्युपसर्गेण सञ्चर्चयन् इत्युदाहृतमस्ति। प्रयोगे सम् इत्युपसर्गः धात्वर्थं प्रबाधते। अध्ययनार्थं प्रबाध्य आवर्तनार्थं बोधयति। यथा–

**सञ्चर्चयन्नपनयन्नाथ बुक्कयिष्णुः श्वेवोग्रशब्दानपरः करुणाध्वकाणः।**
**मल्लो जिजम्भिषुरसूदितवीर्यमीशं मुष्ट्या जजास बहु पाशितवांश्च दोष्णा।।**[२३] इति।

२. ज्ञा मारणतोषणनिशामनेषु इति धातुः मारणार्थे, तोषणार्थे, निशामने (प्रदर्शनार्थे) च क्रमेण संज्ञिपत, विज्ञपयेम, चेति प्रयोगेषु सम्, वि, प्र इति उपसर्गाः धात्वर्थस्यानुगमनं कुर्वन्ति। तद्यथा–

**प्रह्मल्यचित्तां स्मरयत्यसौ मां नन्दात्मजं संदरकः खलानाम्।**
**अनारि येन श्रपितं पयोऽपि बालैर्मुहुः संज्ञपितासुरेण।।**
**तमेव किं विज्ञपयेम मारं येनाच्युतं प्रज्ञपयेन्न बाणान्।**
**करे सरोजं चलयेन्न चाल्यः स किं मुरारिश्छदयेत्पुनर्नः।।**[२४] इति।

३. मील श्मील क्ष्मील निमेषण सङ्कोचने इत्यादि धातूनाम् उन्मीलनश्मीलन, उत्स्मीलितक्ष्मीलितः चेति प्रयोगेयोः उत् इत्युपसर्गः तिरोदाने अर्थात् अप्रकाशने धात्वर्थं विशिनष्टि। यथा–

**उन्मीलनश्मीलनलीलया दृशोरुत्स्मीलितक्ष्मीलितविश्वविष्टपम्।**
**पिच्छस्त्रजा पीलितनीलकुन्तलं शीलेन संकीलितलोकमानसम्।।**[२५] इति।

एवं प्रकारेण काव्ये सोपसर्गयुक्तधातूनां प्रयोगेषु क्वचिदुपसर्गो धात्वर्थं बाधते, क्वचित् धात्वर्थस्यानुगमनं करोति। कश्चिदुपसर्गः तमेव धत्वार्थं विशिनष्टि। तथैव च सोपसर्गस्य धातोः सकर्मक–अकर्मकयोः, परस्मैपद–आत्मनेपद–उभयपदादिषु च परिवर्तनं दृश्यत इति वक्तुमीहते।

## धातुना एकेनोभयप्रयोजनसाधनम्

संस्कृतभाषायां सामान्यत एकेन धातुना एकाधिकाः प्रयोगा एकवाक्ये प्रयोक्तुं शक्यन्ते। तथैव धातुकाव्ये

उभयप्रयोजनदृशा धातोरेकस्य अनेके प्रयोगा एकवाक्ये प्रयुक्ता दृश्यन्ते विशेषेण परस्मैपदात्मनेपदोभयपदादित्रिप्रकारकाः धातवः काव्ये द्विधा त्रिधा वा काव्योचितं परिवर्त्य सुप्–तिङ्–उपसर्ग–सनादि–कृदादि सहितं श्लेषया, विभाषया वा प्रयुक्ताः। इत्यतः अत्र धातुरेकेन काव्यप्रयोगवैशिष्ट्यं विचार्यते। भ्वादिगणे वाट इत्येक एव धातुः वटितैः, वटु इति च द्विधा प्रयुक्तः। यथा–

**लाटार्हशाटीवटितैर्वटुव्रजैर्वृतान्खलैश्चाकिटितान्प्रखेटकैः।**

**अशेटनीयैः सुधियामसेटकैर्युताञ्झटाझाटधरैश्च कैश्चन।।**[२६]

अन्यत्र वल्ल इति धातोः वल्लमानम्, वल्लवी इति च द्विधा प्रयुक्तौ। यथा–

**प्रक्रोपयन्तं मुरलीं महीभरक्ष्मायं बलस्फीतसुपीनदोर्युगम्।**

**अशेषतां भ्रूशलनैर्वलद्दृशा प्रवल्लमानं प्रियवल्लवीशुचम्।।**[२७]

तथैव जुहोत्यादिगणे डुभृञ् इति धातू भार, भृतैः इति च द्विधा प्रयुक्तौ। तद्यथा–

**जुह्वत्प्रियो भीरुजनं ह्रियार्तं बिभ्रत्कृपाभारभृतैरपाङ्गैः।**

**अमेयधामा स जहेऽघहानिं ददज्जनेभ्यो मुदमादधानः।।**[२८] इति।

अन्यत्र वेञ् तन्तुसन्ताने, व्येञ् संवरणे, ह्वेञ् स्पर्धायां शब्दे च भ्वादिगणान्त उभयपदधातवः उत, वीत, समाहूय इति[२९], शक विभाषितो मर्षणे इति उभयपदिधातुः शक्यः, शक्यमानश्चेति परस्मैपदे–आत्मनेपदे च प्रयुक्तौ।[३०]

तथैव केचन धातवः श्लेषार्थे सुप्–तिङ् कृदादिषु चोपन्यस्ताः विरलाः प्रयोगाः काव्ये संलक्ष्यन्ते। तद्यथा द्वितीयसर्गे आर्द्रीभावार्थे पठित तिम ष्टिम ष्टीम इति धातवः तिम्यत्, स्तिम्यति, स्तीम्यत् इति च श्लेषार्थे प्रयुक्तौ। यथा–

**तिम्यन्मतेस्तिम्यति नाम मन्मनः स्तीम्यत्सु तद्व्रीलमृते वदाम्यहम्।**

**देहि प्रभोः प्रेष्य सुसोहनाय मे जीर्णांशुकायः त्वमक्षीर्णमंशुकम्।।**[३१]

इत्यत्र "खर्परे शरि वा विसर्गलोपो वक्तव्यः" इत्यनुसारं विसर्गलोपे मनः+स्तीम्य इति, पक्षान्तरे मनः+तीम्य इति वा श्लेषार्थे पदच्छेदः भवति।

एवं काव्ये धातोः अर्थभेदस्य स्वरूपभेदस्य प्रकाशनाय एकेन धातुना प्रयुक्ताः एतादृशाः प्रयोगाः असंख्याकाः परिलक्ष्यन्ते।

## वेदे प्रयुज्यमानानां धातूनामादानं त्यागश्च

धातुकाव्ये लौकिकधातून् विहाय माधवीयधातुवृत्तौ वेदे प्रयोक्तुं निर्दिष्टाः धातवः प्रायः न प्रयुक्ताः। यतः वेदे प्रयुज्यमानाः धातवः काव्यप्रयोगे व्याकरणशास्त्रविरुद्धा भवन्ति। किञ्च काव्ये क्वचित्सन्दर्भेषु वेदे लौकिके च प्रयुज्यमानाः धातवश्च महाभाष्यादिव्याकरणशास्त्रप्रवक्तृणाञ्च मतानुसारं प्रयुक्ताः सन्दृश्यन्ते। यथा जुहोत्यादिगणे घृ, ह्व, ऋ, शृ, कि, भस, कित, तुर, धन, जन, गा इत्यादि दश धातवः छन्दसामेव प्रयोक्तव्याः, परं 'बहुलं छन्दसि'[३२] इति पाणिनीयसूत्रव्याख्याने पूर्वोक्तेषु दशसु घृ, ऋ, भाष, तुर, धन इति पञ्च धातवः लौकिकभाषायामपि प्रयोक्तुं शक्यन्त इति महाभाष्यकारा उपदिशन्ति। तदनुसारेणैव घृ क्षरणदीप्त्योः इत्यस्य घर्म इति, ऋ गतौ इत्यस्य समारत इति, भस भर्त्सनदीप्त्योः इत्यस्य नभ इति, तुर त्वरणे इत्यस्य

तुरैः इति, धन धान्ये इत्यस्य च प्रधन इति पञ्च धातवः काव्योचितमुदाहृताः इत्यवगम्यते। तद्यथा–

**प्रणेनिजद्भिर्मतिमर्थतत्त्वं सुवेविजानैर्यदुभिः स विष्णुः।**

**घर्मोष्मभिस्तत्र समारताग्रे नभस्तुरैस्तैः प्रधनप्रवीणैः।।**[३३] इति।

अन्यत्र दीधिञ् दीप्तिदेवनयोः, वेवीङ् वेतिना तुल्ये इत्येतौ अदादिगणे छन्दस्येव प्रयोज्याविति निश्चितम्। किञ्च महाभाष्यानुसारं दीधिञ्, वेवीङ् इत्येतौ दीधिति, वेव्यान इति लौकिकार्थे काव्ये प्रयुक्तौ। तद्यथा–

**तं जाग्रतं दीनदरिद्रपोषे चकासतं शासतमप्रशान्तान्।**

**देवं स्फुरद्दीधितमम्बुजाक्ष्यो वेव्यानमालोक्य विमोहमापुः।।**[३४] इति।

तथैव अह, दघ, चमु, रि, क्षि, चिरि, जिरि, दाश, द्रु इत्यादि नव धातवः माधावीयधातुवृत्त्यनुसारं स्वादिगणान्ते हिंसार्थे छन्दस्येव प्रयोक्तव्या इति नियमः। तथैव ''छन्दस्यह व्याप्तौ'' इत्यनेन 'दधादिर्लोकेऽपि' इति, ''एषु छान्दसेषु क्षिधातुः सर्वथा लोकेऽस्ति' इत्यनुसारं वेदे लोके च प्रयोक्तव्याः इति च नियमः। तस्मात् धातुकाव्ये अह इति धातुं विहाय अन्ये अष्टौ धातवः दघ्नुवन्, रिण्वन् मखचमि, रिण्वन्, ऋक्षिण्वताम्, चिरयणैः, जिरिण्वन्, प्रदाश्य, दुर्द्रुवम् इति च लौकिकार्थे उपन्यस्ताः संज्ञायन्ते।[३५]

इत्येवं ''यथोत्तरं मुनीनां प्रामाण्यम्'' इति व्याकरणशास्त्रप्रवक्तॄणाम्, अथ च माधवीयेतरधातुपाठानां च मतानुसारं वा वेदे प्रयुज्यमानेषु केचन धातवः लौकिकार्थे प्रयोक्तुं योग्या इति मत्वा काव्योचितमेव नारायणभट्टेनोदाहृताः इति निर्धार्यते। इत्यतः महाभाष्यादिग्रन्थानां वचनानुसारं वैदिकलौकिकरूपेण प्रयुक्ताः एतादृशाः प्रयोगाः प्रायः पाणिनीयप्रयोगा एव। न तु अपाणिनीयाः।

## उपसंहारः

शास्त्रकाव्यग्रन्थेषु धातुप्राधान्यमुखेन लिखितेषु धातुकाव्यमेव विशिष्टतममिति पण्डितानां समालोचकानां चाभिप्रायः। यतो हि नारायणभट्टेन धातुपाठे निर्दिष्टानुसारं यथाक्रमं यथासम्भवं वा भूवादिधातून् सोदाहरणं सोपमानञ्च प्रयोगमात्रेण निरूपितवान्। अनेन केवलं धातुपाठक्रमेण कथं वा काव्यं कर्तुं शक्यते, तेन सहृदयाह्लादः जन्यत इति शङ्का नैवोत्पद्यते। यतः भू इत्याद्यारभ्य त्रिषु सर्गेषु २४६ श्लोकेषु १९४७ धातवः सनिपुणं काव्योचितं भिन्नप्रकारेण कथानुगुण्यं ससन्दर्भानुसारं प्रत्येकस्मिन् श्लोके दशसु लकारेषु परस्मैपद–आत्मनेपदे च कृत्–कृदन्तादि प्रत्ययानां सहयोगेन प्रयुक्ताः। क्वचिच्च कथानुगण्यं विशेषार्थस्य बोधनाय सोपसर्गमुदाहृताः। तस्मात् शब्दोत्कर्षेण सहृदयानामाकर्षणे धातुकाव्यरचने नारायणभट्टः सफलो जात इति, स च नितरामभिनन्दनार्ह इति वावच्यते। तथैव पाणिनीयशब्दानुशासने सूत्र–गण–धातुपाठादीनां काव्यमाध्यमेन लक्ष्यीकरणेन व्याकरणशास्त्रस्य वैज्ञानिकता लोके सर्वत्र प्रचुरो भवतीति निस्संशयमुच्यते।

## संदर्भ ग्रन्थ सूची

१. कंसहिंसा प्रबन्धार्थौ वीरभक्त्यादयो रसाः। त्रिभिर्दिनैः कृतं कर्म त्रिभिः सर्गैश्च कथ्यते।।
अक्रूरयोगो यात्रादिचापच्छेदान्तचेष्टितम्। मल्लोद्योगादिकंसान्तपर्यन्तं च त्र्यहे कृतम्।। धा.का. १.१

२. धातुपाठे च भूवादिर्भूयान् भवति तत्र च। अगणः प्रथमो भागो द्यूताद्यो गणवान् परः।।

अनयोरगणो भागः प्रथमः सर्ग उच्यते। द्वितीयभागमारभ्य तुदाद्यन्तं द्वितीयके।।
रुधादितश्चुराद्यन्तं तृतीयेनोपवर्ण्यते। व्यज्यते गणभेदादिः कथाभेदादिलाञ्छनैः।। धा.का. १.१

३. ननु धातुपाठानां बहुत्वात् किमीयः क्रमोऽस्मिन्नाश्रीयत इत्यत्राह– वृकोदरोदितानिति। धा.का. १.१

४. अष्टा. ३.१.१३१

५. न कवतेर्यङि (अष्टा. ७.४.६३) इति सूत्रस्य व्याख्यानसन्दर्भे।

६. क्वचित्सुयोज्या धात्वर्थाः क्वाप्ययोज्या उणादिषु। क्वचित्कथंचिद्योज्या स्युर्वक्ष्यन्ते तत्र तत्र ते।
हलन्त्यमुपदेशेऽजित्यादिर्ञिटुडवस्तथा। एभिर्धात्वनुबन्धानां लोपे स्यात् प्रत्ययः पुनः।।
हलन्त्यमिति लुप्येते स्वरार्थावन्तिमौ हलौ। तरौ लचौ नपौ चेति स्वरार्थाः प्रत्ययेषु षट्।। धा.का. ३.६८

७. धा.का. १.२

८. स्कुदि–९, भ्वादिगणः, मा.धा.वृ., ४१

९. धा.का. १.७७

१०. जिन्वन्तमुर्वीं जिनरिण्वनैः सतां रण्वन्तमन्तर्भवधन्वपादपम्।
कृण्वन्तमाश्चर्यगतीरमूतिदं जगन्त्यवन्तं त्रिदशोपधावितम्।। धा.का. १.७६

११. धा.का. १.४

१२. क्षीरतरङ्गिण्यां स्वद स्वर्द संवरणे अर्थे पठ्येते।

१३. कृष्णेऽपि रेजे पथि गोपबालैर्भ्राजिष्णुभिर्भ्राशितपार्श्वदेशः।
विभ्लाशितेऽक्रूररथे सरामः स्यमत्पयोदस्वनभाजि तिष्ठन्।। धा.का. २.२०

१४. मुरादिबन्धुः क्षुरघोरचेताः पुरन् खलानां जनजीववर्ही।
कंसः स्थितो यत्र ततर्ह लोकं स्तृढामरस्तृंहकरानभीच्छन्।। धा.का. २.७७

१५. धा.का. ३.४३, ४४, ४५

१६. धा.का. ३.४६, ४७

१७. धा.का. प्रथमसर्गे १८, १९, २०, २१ संख्यात्मकश्लोकाः।

१८. व्यज्यते गणभेदादिः कथाभेदादिलाञ्छनैः। तात्पर्यभेदाद्योज्यन्ते तुल्यार्था अपि धातवः।। धा.का. १.१

१९. धा.का. १.६७

२०. धा.का. १.४१

२१. धा.का. १.२४

२२. वैयाकरणभूषणसारः, पृ.सं. ४७५

२३. धा.का. ३.३८

२४. धा.का. २.११, १२

२५. धा.का. १.६७

२६. धा.का. १.४०

२७. धा.का. २.५४

२९. ततो निवत्स्यन्दिवसोर्ध्वभागे चारूतकीर्त्यम्बरवीतलोकः।
हरिः समाहूय वदन्सहायान्पुरस्य बाह्योपवनं शुशाव।। धा.का. २.४३

३०. शक्यन्गर्वमशक्यमानमनसामास्विद्यदास्योऽक्रुधं।
क्षुध्यद्भक्तदमाप मालिकवरं शुद्धं स सिद्धेप्सितम्।। धा.का. २.६३

३१. धा.का. २.५७

३२. अष्टा. ७.४.७८

३३. धा.का. २.५५

३४. धा.का. २.५२

३५. किं चादभ्नुवतीमिमां मम गृहानेहीति याञ्चापरा-मेष्यामीत्यमुचत्समृद्धकरुणः क्षिण्वन्कटाक्षैर्धृतिम्।।
क्ष्मां दघ्नुवन्मखचमिव्यसनानि रिण्वन् ऋक्षिण्वतां चिरयणैरपथं जिरिण्वन्।
कंसं प्रदाश्यमतिदुर्द्रमुद्दुदूषुश्छन्दः श्रुतोऽपि स हि कैश्चिदबोधि लोके।। धा.का. २.७०, ७१

## Bibiliography :


| | | |
|---|---|---|
| १. | ईश्वरचन्द्रः | पाणिनीय अष्टाध्यायी, चौखम्बा संस्कृतप्रतिष्ठान, दिल्ली, २००४ |
| २. | उन्नि एन्. पि. | धातुरूपकल्पद्रुमः, ओरियन्टल् बुक सेन्टर, दिल्ली, २००८ |
| ३. | काशीनाथः | (अ) रावणार्जुनीयम्, काव्यमाला-६८, निर्णयसागर प्रेस, मुम्बई, १९०० |
| ४. | कृष्ण टि. आर. | बृहद्धातुरूपावलिः, भारतीयविद्याप्रकाशन, वाराणसी, १९९५। |
| ५. | गङ्गाधरन् नायर जि | संस्कृतव्याकरणचरितम्, संस्कृतभारती, न्यूदिल्ली, २०१३ |
| ६. | चारुदेवशास्त्री | उपसर्गार्थचन्द्रिका (१-२), भारतीय विद्याप्रकाशन, वाराणसी, १९७८ |
| ७. | केदारनाथशर्मा | (अ) धातुकाव्यम् (काव्यमाला १० गुच्छकम्) |
| | वासुदेवशर्मा | (आ) वासुदेवविजयम्, (काव्यमाला १० गुच्छकम्) तृतीय-संस्करणम्, निर्णयसागर प्रेस, मुम्बई, १९१५ |
| ८. | पुष्पादीक्षित | प्रक्रियानुसारी पाणिनीयधातुपाठः, संस्कृतभारती, न्यू दिल्ली, २०१० |
| ९. | मुकुन्द झा शर्मा | यास्कनिरुक्तम्, चौखम्बा संस्कृतप्रतिष्ठानम्, दिल्ली, १९८९। |
| १०. | मुनिलावण्यविजयसूरिः | धातुरत्नाकरः, नवरङ्ग, न्यू दिल्ली, १९९२। |
| ११. | मीमांसकः युधिष्ठिर | मैत्रेयरक्षितस्य धातुप्रदीपः, रामलाल कपूर ट्रस्ट, १९८२ |
| १२. | राधाकान्तदेव राजा | शब्दकल्पद्रुमः, चौखम्बा संस्कृत सीरीज, वाराणसी, १९६७। |
| १३. | लोकमणि दाहलः | (अ) व्याकरणशास्त्रेतिहासः, भारतीय विद्या प्रकाशन, वाराणसी, १९९०। |
| | | (आ) संस्कृतसाहित्येतिहासः, कृष्णदास अकादमी, वाराणसी, १९९९। |
| १४. | सुब्रह्मण्यशास्त्री पोतुकुच्चि | वाङ्मयव्यासमुलु, (प्रथमसम्पुटम्), बाबा आर्टु प्रिन्टर्स, तेनाली, १९८३। |
| १५. | स्वामी द्वारिकादासशास्त्री | माधवीयधातुवृत्तिः, प्राच्य भारतीय प्रकाशन, वाराणसी, १९६४। |
| १६. | श्यामला देवी | वासुदेवविजयम्, न्यू भारतीय बुक कार्पोरेशन, दिल्ली, २०१० |

17. Krishnamachariar M — History of Classical Sanskrit Literature Tirumala Tirupati Devasthanams Press, Madras, 1937

18. Kunjunni Raja K — The Contibution of Kerala to Sanskrit Literature, University of Madras, 1980

१९. प्राच्यविद्यानुसन्धानम् — प्रथममाङ्कः, डा. वेदपालः, जागृति विहार, मेरठ, उ.प्र., २००६ (षाण्मासिकीशोधपत्रिका)

२०. महस्विनी — पञ्चमं कुसुमम्, आचार्य हरेकृष्ण शतपथी, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति, २००६ (षाण्मासिकीशोधपत्रिका)



# पुराणानां महत्त्वम्

**डॉ. कुमारी प्रणीता**
संस्कृतविभाग, तिलकामांझी भागलपुर वि.वि. भागलपुर

किं तावत् पुराणमिति जिज्ञासायां पुराणशब्दार्थो बहुधा निरुच्यते। काश्चन निरुक्तयोऽत्र समासतो निर्दिश्यन्ते। पुराणम् आख्यानं पुराणम् इति, अर्थात् प्राचीनानि आख्यानानि पुराणानीति। यस्मात् पुरा अनति इदं पुराणम्।

यत् पुरा सजीवम् आसीत् तत् पुराणम्। जगतः प्रागवस्थाम् अनुक्रम्य सर्गप्रतिपादकं वाक्यं पुराणम्। संसारोत्पत्तेः विकासक्रमस्य च बोधकं पुराणम्। पुरार्थेषु आनयतीति पुराणम्।

पुरुष-प्रकृत्यादि-पूर्वतत्त्वचिन्तनपरं पुराणमिति।

पुरा परम्परां वक्ति पुराणं तेन वै स्मृतम्।

प्राचीनपरम्परा-प्रतिपादका ग्रन्थाः पुराणमिति।

विश्वसृष्टेरितिहासः पुराणम्। विश्वरचनाया इतिहासमेव पुराणशब्दाभिमतम्।

वायुपुराणे तन्महत्त्वम् उद्घोष्यते यत् चतुर्वेदविदपि पुराणज्ञानविहीनो न विचक्षणपदवीम् आरोढुं शक्नोति।

उक्तं च-

**यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।**
**न चेत् पुराणं स विद्यात् नैव स स्याद् विचक्षणः।।**

पुराणानां धर्मार्थकाममोक्षात्मकचतुर्वर्गसाधनाद् वेदत्वं प्रतिपाद्यते। पुराणं इत्याद्रियते।

उक्तं च भागवते-

**इतिहासं पुराणं च पञ्चमो वेद उच्चते।**

उक्तं च नारदीये पुराणे-

**वेदार्थादधिकं मन्ये पुराणार्थं वरानने।**
**वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः।।**

पुराणलक्षणसन्दर्भे विष्णुपुराणे पुराणस्य पञ्चलक्षणानि उक्तानि।

''**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं चैव पुराणं पञ्चलक्षणम्।।**''

पुराणेषु नवविधसृष्टेः वर्णनं प्रायेण प्राप्यते।

उदाहरणार्थम्– पद्मपुराणस्य सृष्टिखण्डस्य तृतीयेऽध्याये ७६ अध्यायत: ८। अध्यायान् यावत् पद्मानुसारं वर्णनमित्थं प्राप्यते। ये मुख्यरूपेण त्रिषु पदेषु विभज्यन्ते। १. प्राकृतसर्ग:, २. वैकृतसर्ग:, ३. प्राकृत–वैकृतसर्ग:। प्राकृतसर्गस्य संख्या तिस्र:, वैकृतसर्गस्य संख्या– पञ्च तथा प्राकृतवैकृतसर्गस्य संख्या एकैववास्ति। एवं सर्गाणां सम्मिलितसंख्या नव सन्ति।

**महत्तत्त्वस्य सर्ग: ब्रह्मण: प्रथम: सर्ग उच्यते।**

**ब्रह्मण: सृष्टौ सर्वप्रथमस्य तत्त्वस्य आविर्भावो भवति।**

तस्य अनन्तरं पञ्चतन्मात्रा उत्पद्यन्ते। इदमेव भूतस्य सृष्टि:। इन्द्रियसम्बन्धिनी तृतीयसृष्टे: संज्ञा वैकारिकी अस्ति। एषा सृष्टि: प्रकृते: समुद्भूतास्ति। अत्र सर्वप्रथमं स्थानं चतुर्थी सृष्टि: मुख्या सृष्टि: कथ्यते। पञ्चमसर्ग: तिर्यग्योने: मन्यते। षष्ठसर्ग: देवतानामस्ति अस्मादनन्तरं मानुषी सृष्टिरागच्छति। पूर्वसर्गोऽपि ब्रह्मण: सृष्टौ पुरुषार्थस्य असाधक एव जात:।

अतएव सत्यसंकल्प: ब्रह्मा स्वध्यानाद् एकनवीनप्राणिवर्गस्य निर्माणमकरोत् ये पृथिव्यामेव भ्रमण–शीला जीवा आसन्। अष्टमसृष्टि: अनुग्रहनाम्ना ज्ञायते। विष्णुपुराणेन इमां सात्त्विकतामसरूपेण उक्त्वा केवलं सामान्य: संकेत: कृत:।

एका अन्तिमा सृष्टि: नवमसृष्टि: मताऽस्ति या प्राकृतवैकृतरूपास्ति। एषा कौमारसृष्टि: कथ्यते। विष्णुपुराणस्य द्वितीये अध्याये सृष्टे: संक्षिप्तं वर्णनम् अस्ति। तदन्तरं तृतीये अध्याये शक्ते: स्वरूपं प्रभाषितं विद्यते। अस्मिन्नेव प्रसङ्गे ब्रह्मण: आयु: वक्तुं कालविभागानामपि तत्र निरूपणमस्ति। चतुर्थे अध्याये वाराहावतारस्य वर्णनम् पञ्चम–अध्याये पुन: सृष्टे: विस्तारेण विवरणं प्राप्यते। पञ्चमे अध्याये प्राणिनां सृष्टे: कथनेन पूर्वमेव अविद्याया: सृष्टिरुक्ता।

पद्मपुराणस्य एवं विष्णुपुराणस्य अनुसारत: सृष्टे: नव विभागा अनेकेषु पुराणेषु प्राप्यन्ते।

## सन्दर्भ सूची-


१. व्यास: वायुपुराणम्।

२. सायण: ऐतरेयब्राह्मणं।

३. व्यास: पद्मपुराणम्।

४. व्यास: वायुपुराणम्।

५. मधुसूदनसरस्वती।

६. व्यास: वायुपुराणम्।

७. व्यास: भागवतपुराणम्।

८. व्यास: नारदीयपुराणम्।


